# वैदिक-वन्दना

## तेजोऽसि तेजो मयि धेहि

*वीर्यमसि वीर्यं मयि धेहि*

*बलमसि बलं मयि धेहि*

*ओजोऽसि ओजो मयि धेहि।*

*पश्येम शरदः शतम्। जीवेम शरदः शतम्।*

*शृणुयाम शरदः शतम्। प्रब्रवाम शरदः शतम्।*

*अदीनाः स्याम शरदः शतम्। भूयश्च शरदः शतात्।*

*ऊँ शं नो मित्रः शं वरुणः। शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः।*

*शं नो विष्णुरुरुक्रमः। ऊँ शान्तिः शान्तिः शान्तिः।*

*.यजुर्वेदः*

## *शब्दार्थ*

*; तेजोऽसि तेज स्वरूप हो। म यि मुझे।धेहि स्थापित करो ,प्रदान करो। वीर्यम् शक्ति को। बलम् सामर्थ्य को। ओजोऽसि ;तुम ओज के स्रोत हो। ओजः ओज को। ;हे भगवन्!( आपकी कृपा से हम सभी) शतं शरदः सौ वर्ष तक। पश्येम देखें। जीवेम जीवित रहें। शृणुयाम सुनें। प्रब्रवाम बोलें। अदीनाः समर्थ। स्याम होवें। भूयः अधिक। मित्रः मित्र देव आदित्य देव। नः हम लोगों के लिए। शम् कल्याणकारी हो। वरुणः त्वरुण देव। अर्यमा त्र सूर्य।उरुक्रमः विशाल पग वाले।*

## *अन्वयः*

*तेजोऽसि मयि तेजो धेहि।*

*वीर्यमसि मयि वीर्यं धेहि।*

*बलमसि मयि बलं धेहि।*

*ओजोऽसि मयि ओजो धेहि।*

*शरदः शतं पश्येम। शरदः शतं जीवेम। शरदः शतं श्रृणुयाम। शरदः शतं प्रब्रवाम। शरदः शतं अदीनाः स्याम च शरदः शतं भूयः।*

*मित्रः नः शं भवतु। वरूणः नः शं भवतु। अर्यमा नः शं भवतु। इन्द्रः नः शं भवतु। वृहस्पतिः नः शं भवतु। उरुक्रमः विष्णुः नः शं भवतु। ऊँ शान्तिः भवतु। शान्तिः भवतु। शान्तिः भवतु।*

### *वदतु संस्कृतम्*

*विद्यालये उपस्थितेः चिन्ता*

*प्रभा .निर्मले ! कथं धावसि घ्*

*निर्मला .विद्यालयं गच्छामि भगिनि !*

*प्रभा .कथं धावन्ती गच्छसि घ्*

*निर्मला .अद्य विलम्बः जातोऽस्ति ।*

*प्रभा .कथं विलम्बं कृतवती घ्*

*निर्मला .पठने लेखने च संलग्ना आसम् ।*

*प्रभा .इदं तु प्रतिदिनं करोसि घ्*

*निर्मला .परन्तु अद्य विशेषरुपेण कृतवती अस्मि ।*

*प्रभा .कथम् घ्*

*निर्मला .यतः गतदिने अस्माकम् अध्यापिका प्रबोधितवती यत् या बालिका श्वः पाठं पठितवती न भविष्यतिए लेखं लिखितवती न भविष्यतिए पद्यं अभ्यस्तं कृतवती न भविष्यतिए सा पुरस्कृता न भविष्यति ।*

*प्रभा .एवम् घ्*

*निर्मला .आम् । अतएव सर्वं कार्यं कृत्वा इदानीं धावन्ती गच्छामि।*

*प्रभा .अथ अल्पाहारं कृतवती घ् अभुक्त्वा एव वा गच्छसि घ्*

*निर्मला .अवसर एव नासीत् अल्पाहारस्य। विद्यालये मध्याह्नभोजनं करिष्यामि।*

*प्रभा .ईदृशस्ते अध्ययने अनुरागो यद् भोजनमपि परित्यजसि !*

*निर्मला .नहिए विलम्बकारणाद् एवं विहितम् ।*

*प्रभा .ज्ञातम्ए तथापि सावधानं गच्छ । पतिष्यसि खलु ।*

*निर्मला .बाढम्ए अनुगृहीता अस्मि ।*

*विशेषः.इत्थं बालकेषु परस्परं संस्कृत.सम्भाषणस्य कौशल.विकासं कारयत*

***शिक्षण.सङ्केतः.***

*न्दनायाः कक्षायां सस्वरं सामूहिकं पाठं कारयत*

# प्रथमः पाठः

## आश्रमः

*अस्माकं प्रदेशस्य सीतापुरजनपदे नैमिषारण्यं प्राचीनं तीर्थस्थलम् अस्ति। तत्र एकस्मिन् आश्रमे ऋषयः मुनयः गुरवः कवयः छात्राश्च निवसन्ति स्म। आश्रमस्य विशाले परिसरे अश्वत्थ.वट.निम्बाशोक.वृक्षाणां गहना छाया भवति स्म। तत्र फलशालिनः आम्रामलक.पनस.पेरुवृक्षाः अपि विपुलाः आसन्। एभिः वृक्षैः तत्र पर्यावरणं शुद्धमासीत्ए येन शीतलाः वायवः मन्दं.मन्दं वहन्ति स्मए काले.काले च मेघः वर्षति स्म। इदानीमपि तस्मिन् आश्रमे धेनवः बलीवर्दाः अश्वाः अन्ये च पशवः स्वच्छन्दं चरन्ति। वृक्षेषु कपीनां कूर्दनम्ए चटकानां कूजनम्ए मयूराणां नर्तनम् च दर्शकेभ्यः आनन्दं ददति।तस्याश्रमस्य समीपे गोमती नदी प्रवहति। तस्याः निर्मलं जलं सर्वे आश्रमवासिनः पिबन्ति स्म। आश्रमे पशवः पक्षिणश्च विरोधं विहाय एकस्मिन् घट्टे पानीयम् पिबन्ति स्मए एकत्र वसन्ति स्मए तत्रैव खादन्ति स्म च। आश्रमे छात्राणां कृते एते नियमाः आसन्.प्रातः सूर्योदयात् पूर्वम् उत्थातव्यम्ए नद्यां स्नानं कर्तव्यम्ए सन्ध्यावन्दनं करणीयम्ए ईश्वरः नमनीयः सहैव खादनीयं ततः पठनाय कक्षायां गन्तव्यम्। एतान् आश्रमनियमान् सर्वे छात्राः पालनं कुर्वन्तः आसन्।सम्प्रत्यपि आश्रमोऽयं छात्रेभ्यः श्रेष्ठं संस्कारं प्रयच्छति। तत्र जातिगतं भेदभावं विना सर्वे निवसन्ति। स्वास्थ्य.संवर्धनाय व्यायामस्यए योगस्य*

प्राकृतिकचिकित्सायाश्च शिक्षणं प्रचलति। स च आश्रमः त्यागं तपस्यां परोपकारम् उदारतां च शिक्षयति।

## शब्दार्थ

पुराकाले त्र प्राचीन काल में। अश्वत्थः त्र पीपल। नीम्ब त्र नीम। विहाय त्र त्यागकर। आमलकः त्र आँवला। पनसः त्र कटहल। पेरु त्र अमरूद। बलीवर्द त्र बैल। कूर्दनम् त्र कूदना। चटकानाम् चिड़ियों का। विहाय त्र छोड़कर। सम्प्रत्यपि ;सम्प्रति+अपि = इस समय भी।

## अभ्यासः

**1. उच्चारणं कुरुत पुस्तिकायां च लिखत-**

नैमिषारण्यम् ,अश्वत्थम् , पक्षिणश्च ,चिकित्सायाश्च ,प्रयच्छति ,उत्थातव्यम्, सम्प्रत्यपि ,आम्रामलकम्

**2. एकपदेन उत्तरत -**

(क) आश्रमस्य समीपे का नदी प्रवहति ?

(ख) काले-काले कः वर्षति स्म ?

(ग) वृक्षेषु कस्य कूर्दनम् आनन्दं ददाति ?

(घ) आश्रमे भेदभावं विना के निवसन्ति ?

**3. प्रश्नानाम् उत्तराणि लिखत -**

(क) आश्रमे स्वच्छन्दं के के विचरन्ति ?

(ख) स्वास्थ्यसंवर्धनाय आश्रमे किं किं भवति ?

(ग) *छात्राणां कृते आश्रमे के के नियमाः आसन्* ?

(घ) *आश्रमः किं किं शिक्षयति* ?

**4. *उचितं मेलनं कृत्वा लिखत* -**

| | |
|---|---|
| '-*सूर्योदयात् पूर्वम्* | *खादनीयम्* |
| *स्नानम्* | *गन्तव्यम्* |
| *सहैव* | *उत्थातव्यम्* |
| *पठनाय कक्षायाम्* | *कर्तव्यम्* |

**5. *अधोलिखित.पदानां सन्धि-विच्छेदं कुरुत* -**

*यथा- विरोधं विहाय* = *विरोधम्* + *विहाय*

*प्राचीनं तीर्थस्थलम्* = ..................... +........................

*पक्षिणश्च* = ....................+.......................

*छात्राश्च* = .....................+.......................

**6. *उदाहरणानुसारं पदरचनां कुरुत* -**

*यथा- अपश्यत् - पश्यति स्म*।

*अलिखत्* - ........................

*अपिबत्* - ........................

*अगच्छत्* - ........................

7. *विचित्र्य उत्तराणि लिखत -*

(*क*) *फलदायकानां पञ्च वृक्षाणां नामानि लिखत।*

(*ख*) *अनुस्वारसन्धियुक्तानि पञ्च वाक्यानि लिखत।*

(*ग*) *जीवने वृक्षाणाम् उपयोगं लिखत।*

*ध्यातव्यम्- स्म इत्यस्य प्रयोगः-*

*यदा वर्तमान-कालिकैः धातुभिः सह 'स्म' इत्यस्य प्रयोगः भवति तदा ते धातवः भूतकालिक-क्रियाणाम् अर्थान् प्रकटयन्ति।*

*यथा-पठति स्म = पढ़ता था।*

*गच्छति स्म = जाता था।*

*वसन्ति स्म = रहते थे।*

*खादतः स्म = वे दोनों खाते थे।*

## *वदतु संस्कृतम्*

*नमस्कारः = नमस्कार।*

*नमस्ते/नमो नमः = नमस्ते।*

*हरिः ओम् = हॅलो।*

*श्रीमन्/मान्ये = सर/मैडम। (सम्बोधन)*

*धन्यवादाः = धन्यवाद।*

*स्वागतम् = स्वागत।*

*क्षमां करोतु/क्षम्यताम् = क्षमा कीजिए।*

*नास्ति चिन्ता = कोई बात नहीं।*

*कृपया = कृपया।*

*आम् = हाँ।*

*न/नहि = नहीं।*

*उत्तमम्/अत्युत्तमम् = अच्छा/बहुत अच्छा।*

*हार्दिक्यः शुभकामनाः = हार्दिक शुभकामनाएँ।*

*अभिनन्दनम् = अभिनन्दन।*

*पुनः मिलामः = फिर मिलेंगे।*

*विशेष-एवमेव बालकेषु परस्परं वार्तालापस्य प्रवृत्तेः विकासं कारयत।*

***शिक्षण-सङ्केतः***

*-गुरुकुल-शिक्षापद्धति-विषये आश्रमीयजीवनविषये च चर्चां कारयत।*

## *द्वितीयः पाठः ,*

## *मातृदेवो भव*

*मुकुलः एकः बालकः अस्ति .तस्य एकं मित्रम् अस्ति .तस्य नाम सतीशः अस्ति .एकदा सतीशस्य जननी ज्वरेण पीड़िता अभवत् सा अवदत -भो सतीश !गच्छ ,वैद्यम आनय ."सतीशोअवदत् -अयम् मे क्रीडनस्य कालः मम मित्राणि आगच्छन्ति अहम् क्रीडनार्थम गच्छामि इति उक्त्वा सः बहिः अगच्छत्*

*तस्मिन् एव काले सतीशस्य मित्रम मुकुलः तत्र प्राप्तः सः सतीशस्य जननीं ज्वरेण पीड़िताम अपश्यत् सः ताम अपृच्छत -"कुत्र सतीशः गतः "इति . सा अवदत् -मित्रैः सह क्रीडितुम गतः .मुकुलः दुखितो अभवत् सः बहिः अगच्छत सः सतीशम क्रीड़ाक्षेत्रात गृहम् आनयत् अवदत् च -हे मित्र एषा तव जननी ज्वर पीड़िता अस्ति त्वया अस्यः सेवा कर्तव्या . किम त्वं न जानासि .तैतिरीयोपनिषद उपदिशति - मातृ देवो भव इति अन्यदपि उक्तम -*

*अभिवादनशीलस्य नित्यम वृद्धोपसेविनः*

*चत्वारि तस्य वर्धन्ते आयुर्विद्या यशो बलम्*

*"अधुना सत्वरं गच्छ ,चिकित्स्कम च आनय" इति श्रुत्वा सतीशः वैद्यम आनयत् .तस्य जननी प्रमुदिताऽभवत*

## *शब्दार्थः*

*ज्वरेण = बुखार से। वैद्यम् = वैद्य को। उक्त्वा = कहकर। तत्र प्राप्तः = वहाँ पहुँचा। क्रीडितुम् = खेलने के लिए। क्रीडाक्षेत्रात्= खेल के मैदान से। आनयत् = लाया। उपनिषद् उपदिशति = उपनिषद सीख देती है। अन्यद् अपि उक्तम् = और भी कहा गया है। चत्वारि = चार। सत्वरम् = शीघ्र। प्रमुदिता = प्रसन्न।*

## अभ्यासः

1. उच्चारणं कुरुत पुस्तिकायां च लिखत-

क्रीडनार्थं ,वृद्धोपसेविनः, क्रीडितुम् ,अपृच्छत् ,दुःखितोऽभवत् ,अभिवादनशीलस्य

2. एकपदेन उत्तरत -

(क) सतीशस्य जननी केन पीडिता आसीत् ?

(ख) मुकुलः कस्य मित्रम् अस्ति ?

(ग) कः दुःखितोऽभवत् ?

(घ) कः वैद्यम् आनयत् ?

3. कः/का, उक्तवान्/ उक्तवती इति लिखत- माता/मुकुलः/सतीशः

(क) भोः सतीश! गच्छ वैद्यम् आनय। .................................

(ख) अहं क्रीडनार्थं गच्छामि। .................................

(ग) मित्रैः सह क्रीडितुं गतः। .................................

(घ) हे मित्र ! एषा तव जननी ज्वरपीडिता अस्ति। .................................

4 .पूर्णवाक्येन उत्तरत -

(क) मुकुलः सतीशस्य मातरम् किम् अपृच्छत् ?

(ख) सतीशः किम् उक्त्वा बहिः अगच्छत् ?

(ग) उपनिषद् किम् उपदिशति ?

(घ) सः सतीशं कुतः आनयत् ?

5. प्रश्नानाम् उत्तराणि लिखत -

(क) सतीशस्य जननी कदा प्रमुदिता अभवत् ?

(ख) आयुर्विद्या यशोबलं कस्य वर्धन्ते ?

(ग) किं श्रुत्वा सतीशः वैद्यम् आनयत् ?

(घ) सतीशः कुत्र अगच्छत् ?

6. अधोलिखितानि-पदानि वाक्य रचनां कुरुत -

<u>पदम्</u>

यथा- ज्वरेण महेशः ज्वरेण पीडितः

मित्राणि

ताम्

क्रीडाक्षेत्रात्

7. विचिन्त्य लिखत-

यदि भवतः सहपाठी रुग्णः स्यात् तदा भवान् किं करिष्यति ? इति लिखत।

<u>शिक्षण-सङ्केतः- कक्षायां चर्चां कारयतु</u>

(क) मातुः पितुः श्रेष्ठजनानां च सत्काराय बालकाः किं किं कुर्वन्ति?

(ख) क्रीडनं लाभदायकमस्ति परन्तु गृहे समस्यासु आगतासु प्रथमं किम् आवश्यकम् अस्ति?

***बन्धुबान्धवानां नामानि-***

***पितामहः = दादा, पितामही = दादी, पितृव्यः = चाचा,***

***पितृव्या = चाची भगिनी = बहन, अग्रजः = बड़ा भाई,***

***अनुजः = छोटा भाई, अग्रजा =बड़ी बहन अनुजा = छोटी बहन,***

***सहोदरा = सगी बहन, सहोदरः = सगा भाई, जनकः = पिता***

***जननी = माता, मातुलः = मामा,***

***भ्रातृजाया = भाभी, भ्रातृजः = भतीजा, भ्रातृजा= भतीजी,***

***भागिनेयः = भानजा/भगिना ननान्दा = ननद, पितृस्वसा = बुआ,***

***आवुत्तः = बहनोई, पुत्रः/तनयः = बेटा, मातामहः = नाना।***

***न गृहं गृहमित्याहुः गृहिणी गृहमुच्यते।***

## तृतीयः पाठः

## अस्माकं पर्वाणि

दीपावली प्रकाशस्य महोत्सवः अस्ति.इदं पर्व कार्तिक्याम अमावस्यायाम संघटते अस्मिन् दिने भगवान् रामचन्द्रः चतुर्दशवर्षमितं वनवासम् पूर्ण कृत्वा रावणम जित्वा अयोध्यां प्रत्यागच्छत तदा प्रभृति इदं पर्वं प्रचलति अयुष्मनि महापर्वाणि रात्रौ महालक्ष्मीपूजनम भवति वयं च देवीं धन धान्यादिकम याचामहे सर्वे जनाः स्वकीयान गृहान दीपमालया सज्जयन्ति सायं वीथी स्वापणेषु मार्गेषु गृहेषु च सर्वत्र दीपानाम प्रकाशम पश्यामः . अहो !कियत् चाक चिक्यम प्रतिभवनेषु विद्युत्दीपानाम पर्वसु दीपावली प्रमुखं पर्वः वर्तते .अस्माकं देशे अन्यानि पर्वाणि अपि सन्ति .रक्षाबन्धनम ,विजया दशमी ,होली इत्यादीन

कार्तिकमासस्यैव पूर्णिमायाम गुरुनानक देवस्य जयंती भवति .अस्यामेव तिथौ गुरुनानक देवस्य जन्म अभवत् .सिक्ख धर्मावलम्बिनः जनाः अस्मिन दिने विशिष्टायोजनम कुर्वन्ति .तैः सह तेषाम इष्ट मित्राण्यपि इदम् पर्व मान्यन्ति ते परिवारजनान गुरुद्वारम नयन्ति तत्र शिरः नत्वा "गुरुग्रन्थ साहिब"इति नामधेयम

*स्वकीयम धर्मग्रंथम  श्रणवन्ति ,मित्रैः सह संलपन्ति आनंदम च लभन्ते*

*ईसाईजनानां पर्व क्रिसमस- नामकम् अस्ति। इदं पर्व दिसम्बरमासस्य पञ्च विंशतितमे दिवसे भवति। अमुष्मिन् दिवसे परमकारुणिकः ईसामसीहः अजायत्। जनाः 'गिरजाघर' इति मन्दिरेषु प्रार्थनां कुर्वन्ति। सान्ताक्लाजः शिशुभ्यः उपहारान् प्रयच्छति।*

*'ईद-उल-फितर' मुस्लिमसमाजस्य पर्व अस्ति। अमुष्यायोजनं रमजानमासस्य समाप्तौ भवति। रमजानमासे मुस्लिमजनाः एकमासं दिवा उपवासं कुर्वन्ति (रोजा)। केवलं रात्रौ एव मिलित्वा खादन्ति। सम्बन्धिनां मित्राणां च गृहं गच्छन्ति। परस्परं वर्धापयन्ति। सुपरिचितेभ्यः मिष्टान्नादिकं वितरन्ति।नवानि वस्त्राणि धारयन्ति च।*

## शब्दार्थः

*संघटते = पड़ता है। अमुष्मिन् दिने = इस दिन। चतुर्दशवर्षमितम् = चौदह वर्ष पर्यन्त। प्रत्यागच्छत् = वापस आए। तदा प्रभृति इदम्= तभी से यह। याचामहे = माँगते हैं। वीथीषु= गलियों में।मार्गों में।आपणेषु = दुकानों में। चाकचिक्यम् = चकाचौंध। नयन्ति = ले जाते हैं। नत्वा = झुका कर। परमकारुणिकः = अत्यन्त दयावान्। अजायत्= जन्म लिये। नामधेयेषु = नामक। उपहारान् = भेंट को। प्रयच्छति = देता है। उपवासं कुर्वन्ति= उपवास करते हैं (रोजा )। सुपरिचितेभ्यः= परिचित लोगों के द्वारा। वर्धापयन्ति = बधाई देते हैं। मनोहराणि नवानि = सुन्दर और नये।*

1. *उच्चारणं कुरुत पुस्तिकायां च लिखत -*

*कार्तिक्याम् विशिष्टायोजनम् सज्जयन्ति चतुर्दशवर्षमितम्*

*ईद-उल-फितर इष्टमित्राण्यपि अलङ्कृतवान् सान्ताक्लाजः ईसामसीहः सुपरिचितेभ्यः मिष्टान्नादिकम् सुपरिचितेभ्यः*

**2. एकपदेन उत्तरत -**

(क) दीपावली कस्य पर्व अस्ति ?

(ख) कार्तिकमासस्य पूर्णिमायां तिथौ कस्य जयन्ती भवति ?

(ग) सिक्खमहानुभावाः समागतेभ्यः जनेभ्यः प्रसादरूपेण किं वितरन्ति ?

(घ) ईसाईजनानां रमणीयं प्रमुखं पर्व किमस्ति ?

(ङ) मुस्लिमसमाजस्य कः पर्व अस्ति ?

**3. पूर्णवाक्येन उत्तरत -**

(क) रामः अयोध्यां कदा प्रत्यागच्छत् ?

(ख) गुरुनानकदेवस्य जन्म कदा अभवत् ?

(ग) जनाः 'गिरिजाघर' इति मन्दिरेषु किं कुर्वन्ति ?

(घ) रमजानमासे मुस्लिमजनाः किं कुर्वन्ति ?

**4. रेखांकित-पदानि आधृत्य प्रश्ननिर्माणं कुरुत -**

यथा- दीपावली प्रकाशस्य पर्व अस्ति। दीपावली कस्य पर्व अस्ति ?

(क) दीपावली महापर्वणि रात्रौ लक्ष्मीपूजनं भवति।

(ख) सिक्खधर्मावलम्बिनः गुरुग्रन्थसाहिब इति धर्मग्रन्थं शृण्वन्ति।

(ग) ईसाईजनानां रमणीयं पर्व क्रिसमसनामकम् अस्ति।

**5. समासविग्रहं कुरुत -**

यथा-लक्ष्मीपूजनम् = लक्ष्म्याः पूजनम्।

सिक्खधर्मः = ..............................

ख्रीष्टोपासना = ..............................

पीताम्बरम् = ..............................

चोरभयम् = ..............................

6.मञ्जूषातः पदानि चित्वा वाक्यानि पूरयत-

उपहारान् एकमासम् गुरुद्वारम् पराकाष्ठाम्

(क) सिक्खधर्मावलम्बिनः परिवारजनान् ......................... नयन्ति।

(ख) सान्ताक्लाजः शिशुभ्यः ............................ प्रयच्छति।

(ग) निशीथे असौ महोत्सवः ......................... आरोहति।

(घ) रमजानमासे मुस्लिमजनाः .................... दिवा उपवसन्ति।

7. संस्कृते अनुवादं कुरुत -

(क) दीपावली प्रकाश का पर्व है।

(ख) हम सब धन-धान्य की याचना करते हैं।

(ग) सिक्खजन गुरुग्रन्थसाहिब को नमस्कार करते हैं।

(घ) ईसाई लोग क्रिसमस के दिन गिरजाघरों में प्रार्थना करते हैं।

विचित्र्य लिखत -

*अस्माकं समाजे अन्ये के के उत्सवाः भवन्ति, तैः उत्सवैः समाजस्य कः लाभ? इति लिखत।*

*स्मरणीयम्-*

*<u>मिष्टान्नानां नामानि</u>*

*मोदकः - लड्डू*

*रसगोलकम् - रसगुल्ला*

*दुग्धपूपिका - गुलाब जामुन*

*पिण्डः - पेड़ा*

*चक्रिका - बर्फी*

*संयावकम् - गुझिया*

*कौष्माण्डकम् - पेठे की मिठाई*

*मधुमष्ठः - बालूशाही*

*कुर्चिका - रबड़ी*

*मिष्टपाकः - मुरब्बा*

*<u>शिक्षण-सङ्केतः</u>*

*<u>विविध-धर्मावलम्बिनाम् उत्सवानां परस्परं सौहार्दविकासाय चर्चां कारयत।</u>*

# चतुर्थः पाठः

# वर्धमानः महावीरः

भारतवर्षे प्रचलितेषु धर्मसम्प्रदायेषु जैनधर्मः महत्त्वं भजते। वर्धमानः महावीरः एतस्य जैनधर्मस्य अन्यतमः महापुरुषः आसीत्। तस्य जन्म ईसापूर्वं 599 तमे वर्षे वैशालीनगरस्य कुण्डग्रामे अभवत्। बाल्यकाले तस्य नाम वर्धमानः इत्यासीत्। तस्य पितुः नाम सिद्धार्थः मातुश्च नाम त्रिशला इत्यासीत्। सः शैशवात् एव बुद्धिमान्,सदाचारसम्पन्नः विचारशीलश्च आसीत्। तस्य विवाहः यशोदानाम्न्या राजकुमार्या सह अभवत्। तस्य एका पुत्री प्रियदर्शिनी अजायत। वर्धमानः बाल्यकालादेव विरक्त आसीत्। समाजे प्रचलितः आडम्बरः, वर्गभेदः जीवहिंसा च तस्य मनसः विकलतायाः कारणानि आसन्। पितरि दिवङ्गते तस्य मनः शोकोद्विग्नमभवत्। मोहं मायां च परित्यज्य सः

संन्यासं गृहीतवान्। तदानीं सः त्रिंशद्वर्षवयस्क आसीत्। कठिनेन तपसा सः सत्यस्य शान्तेश्च अन्वेषणे प्रवृत्तोऽभवत्। द्वादशवर्षाणि यावत् तपः तप्त्वा सः ज्ञानं प्राप्नोत्। तपसा सः इन्द्रियाणि संनियम्य महावीरः जिनो वा अभवत्। जैनमतानुसारेण

वर्धमानमहावीरात् पूर्वं त्रयोविंशतिः तीर्थङ्कराः अभवन्। महावीरः जैनधर्मस्य

*अन्तिमः चतुर्विंशः तीर्थङ्करः आसीत्।*

*ज्ञानप्राप्तेः अनन्तरं महावीरः त्रिंशत् वर्षाणि यावत् जैनधर्मस्य महता उत्साहेन प्रचारम् अकरोत्। शनैः शनैः भारतस्य प्रायशः सर्वेषु राज्येषु जैनधर्मस्य सम्यक् प्रचारः स×जातः। तेन प्रदर्शितेन मार्गेण जनाः कैवल्यं प्राप्तुं समर्थाः भवन्ति। तस्य मतेन न केवलं मनुष्याः, पशवः, पक्षिणः वा प्राणवन्तः, अपितु वृक्षादिषु प्रस्तरादिष्वपि प्राणाः सन्ति। महावीरस्य उपदेशानुसारेण सम्यक्-दर्शनम्, सम्यक्-ज्ञानम्, सम्यक्-चरित्रम् इति त्रिरत्नोपासनया जनाः मोक्षं लभन्ते। शुद्धाचरणाय सत्य-अहिंसा-अस्तेय-ब्रह्मचर्य-अपरिग्रह इति प×चमहाव्रतानां विधानं सः अकरोत्। साधारणजनैः सह बिम्बिसार-अजातशत्रुप्रभृतयो राजानः अपि तस्य उपदेशैः प्रभाविताः अभवन्। तेनोपदिष्टस्य मार्गस्य सत्यम् अहिंसा च आधारभूते स्तः।*

*द्विसप्ततिवर्षवयसि पाटलिपुत्रसमीपे पावापुरीस्थाने महावीरः रुग्णो जातः निर्वाणं च प्राप्तः।*

## *शब्दार्थ*

*अन्यतमः = बहुतों में से एक/सर्वश्रेष्ठ। शैशवात् = बचपन से। सदाचारसम्पन्नः = सदाचार से युक्त। अजायत = उत्पन्न हुई। (जन् धातु, लङ्लकार, प्रथम पुरुष, एक वचन)। वर्गभेदः = ऊँच-नीच का भेद-भाव।विकलतायाः = व्याकुलता के। दिवङ्गते = मरने पर। शोकोद्विग्नम् = शोक से सन्तप्त, बेचैन। तदानीम् = उस समय। प्रवृत्तः = लग गये। संनियम्य = नियन्त्रित करके। त्रयोविंशतिः = तेईस । चतुर्विंशः = चैबीसवें। कैवल्यम् = मोक्ष। प्राणवन्तः = सजीव। प्रस्तरादिषु = पत्थर आदि में।त्रिरत्नोपासनया = तीन रत्नों के पालन से। अस्तेयम् (न + स्तेयम्) = चोरी न करना। अपरिग्रहः = अपने पास कुछ न रखना। द्विसप्ततिवर्षवयसि = बहत्तर वर्ष की उम्र में। रुग्णः = रोगी।*

## *अभ्यासः*

1. *उच्चारणं कुरुत पुस्तिकायां च लिखत-*

वर्धमानः त्रिंशद्वर्षवयस्कः शोकोद्विग्नः अपरिग्रहः

दिवङ्गते बिम्बिसारः द्विसप्ततिवर्षवयसि त्रिरत्नोपासना।

2. एकपदेन उत्तरत -

(क) वर्धमानमहावीरस्य पितुः नाम किम् आसीत् ?

(ख) वर्धमानमहावीरस्य मातुः नाम किम् आसीत् ?

(ग) जैनधर्मानुसारेण त्रिरत्नोपासनया जनाः किं लभन्ते ?

(घ) जैनधर्मस्य अन्तिमः तीर्थङ्करः कः आसीत् ?

3. पूर्णवाक्येन उत्तरत -

(क) महावीरः कति वर्षाणि यावत् जैनधर्मस्य प्रचारम् अकरोत् ?

(ख) महावीरस्य जन्म कुत्र अभवत् ?

(ग) महावीरस्य पुत्र्याः नाम किम् आसीत् ?

(घ) जैनमतानुसारेण महावीरात् पूर्वं कति तीर्थङ्कराः अभवन् ?

4. प्रश्नानामुत्तराणि लिखत -

(क) कानि पञ्च महाव्रतानि सन्ति ?

(ख) त्रिरत्नानि कानि सन्ति ?

(ग) महावीरस्य उपदेशैः के के प्रभाविताः अभवन् ?

(घ) महावीरस्य मनसः विकलतायाः कानि कारणानि आसन् ?

5. *मञ्जूषातः क्रियापदानि चित्वा वाक्यानि पूरयत -*

*अकरोत् अभवत् गृहीतवान् आसीत्*

(*क*) *महावीरः जैनधर्मस्य श्रेष्ठः महापुरुषः* .........................।

(*ख*) *महावीरस्य जन्म वैशालीनगरस्य कुण्डग्रामे* ......................।

(*ग*) *जैनधर्मस्य प्रचारं महावीरः उत्साहेन* ........................।

(*घ*) *त्रिंशद्वर्षवयसि मोहमायां परित्यज्य महावीरः संन्यासम्* ............................।

6. *अधोलिखित-पदेषु सन्धि-विच्छेदं कुरुत -*

*मतानुसारेण* = .... +......

*इत्यासीत्* = ..... +....

*उपदेशानुसारेण* = ... + ...

*त्रिरत्नोपासनया* = ... + .....

7. *संस्कृतभाषायाम् अनुवादं कुरुत -*

(*क*) *वर्धमान महावीर जैनधर्म के चैबीसवें तीर्थङ्कर थे*।

(*ख*) *महावीर की माता का नाम त्रिशला था*।

(*ग*) *पत्थर में भी प्राण हैं*।

(*घ*) *उस समय वे तीस वर्ष के थे*।

**शिक्षण-सङ्केत**

## पञ्चमः पाठः

***काकः कृष्णः पिकः कृष्णः को भेदः पिक-काकयोः।***

***वसन्तसमये प्राप्ते काकः काकः पिकः पिकः*** । 1।

***विद्या विवादाय धनं मदाय शक्तिः परेषां परिपीडनाय।***

***खलस्य साधोर्विपरीतमेतत् ज्ञानाय दानाय च रक्षणाय।*** 2।

***लोभात् क्रोधः प्रभवति लोभात् कामः प्रजायते।***

***लोभात् मोहश्च नाशश्च लोभः पापस्य कारणम्।*** 3।

वदनं प्रसाद- सदनं सदयं हृदयं सुधामुचो वाचः।

करणं परोपकरणं येषां केषां न ते वन्द्याः। 4।

सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते।

मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते। 5।

## शब्दार्थः

पिकः = कोयल। प्राप्ते = आने पर। भारः = बोझ। विवादाय = विवाद के लिए। मदाय = मद के लिए। परिपीडनाय= दूसरों को सताने के लिए। खलस्य= दुष्ट का। साधोः =सज्जन का । विपरीतम्= उल्टा।प्रसाद-सदनम्= प्रसन्नता का आगार। सदयम् = दया से परिपूर्ण।सुधामुचः = अमृत बरसाने वाली। वन्द्याः = वन्दनीय। योगेन = अभ्यास। मृजया = धोने-माँजने से। वृत्तेन = सदाचार से।

1. उच्चारणं कुरुत पुस्तिकायां च लिखत-

साधोर्विपरीतमेतत्, रक्षणाय, मोहश्च, सुधामुचो, रक्ष्यते, मृजया।

2. एकपदेन उत्तरत -

(क) काकस्य कीदृशः वर्णः भवति ?

(ख) साधोः विद्या किमर्थं भवति ?

(ग) लोभः कस्य कारणम् ?

3. *पूर्णवाक्येन उत्तरत -*

(*क*) *कस्मिन् समये काकपिकयोः भेदः स्पष्टः भवति* ?

(*ख*) *कुलं केन रक्ष्यते* ?

(*ग*) *लोभात् किं प्रभवति* ?

4. *श्लोकांशान् योजयत -*

*खलस्य साधोर्विपरीतमेतत्*

...............................................।

*लोभात् मोहश्च नाशश्च*

................................................।

*वदनं प्रसादसदनं*,

................................................।

*मृजया रक्ष्यते रूपम्*

................................................।

5. *उपयुक्तकथनानां समक्षम् 'आम्' इति अनुपयुक्तकथनानां समक्षम् 'न' इति लिखत-*

(*क*) *विद्या योगेन रक्षति*।

(*ख*) *साधोः विद्या विवादाय भवति*।

(*ग*) *लोभः पापस्य कारणम् भवति*।

6. संस्कृतभाषायाम् अनुवादं कुरुत -

(क) लोभ मोह और नाश का कारण है।

(ख) कुल की रक्षा सदाचार से होती है।

(ग) साधु की शक्ति दूसरों की रक्षा के लिए होती है।

(घ) महापुरुषों का हृदय कोमल होता है।

7. निम्नलिखितपदानां संस्कृतस्य लघुवाक्येषु प्रयोगं कुरुत।

(क) धनम्..................................................।

(ख) सत्यम्..................................................।

(ग) लोभः..................................................।

(घ) हृदयं..................................................।

स्मरणीयम्-

किं कर्त्तव्यम्

किं कर्त्तव्यं संकटकाले ? धैर्य धारणम्।

किं कर्त्तव्यं दुर्जनसंगे ? मौन-धारणम्।

किं कर्त्तव्यं वर्षासमये ? छत्र-धारणम्।

किं कर्त्तव्यं संकटकाले ? दण्डधारणम्।

नास्त्युद्यमसमो बन्धुः।

षष्ठः पाठः

## किं तर्तुं जानाति भवान्

(तुमुन्-क्त-प्रत्ययौ विधिलिङ्लकारश्च)

विश्वविद्यालयस्य कश्चित् प्राध्यापकः विहर्तुं नावम् आरूढः। नावा जलविहारं कर्तुं तस्य प्रथमोऽयमवसरः आसीत्। बालसूर्यस्य किरणानां जलक्रीडाम्, वीचीनां नर्तनम्, अम्भसाम् अपारराशिम्, अरित्रमाध्यमेन नौकायाः अग्रेसारणम् इत्यादि दृश्यं दृष्ट्वा सः नाविकम् एवम् अपृच्छत्-

प्राध्यापकः - भो नाविक ! किं भवता कदापि गणितं पठितम् ?

नाविकः - न पठितम्।

प्राध्यापकः - किं गणितं पठितुं विद्यालयं न गतवान्।

नूनं भवतः जीवनस्य चतुर्थांशः व्यर्थतां गतः। भवता

रसायनशास्त्रं भौतिकशास्त्रं वा पठितं स्यात्।

नाविकः - ईदृशं मे भाग्यं कुतः ? यदहं भौतिक-

*शास्त्रं रसायनशास्त्रं वा पठेयम्।*

*प्राध्यापकः - नूनं त्वया अर्धांशः जीवनस्य व्यर्थतां नीतः। वद वद त्वया आंग्लभाषा तु पठिता स्यादेव?*

*नाविकः - (ग्लानिम् अनुभवन्) महाशय! नाहं मात्रा पित्रा वा विद्यालयं प्रेषितः। कुतः पठेयम्?*

*प्राध्यापकः - तर्हि तव जीवनस्य त्रयो भागाःअपार्था जाताः। अत्रान्तरे नदे जलावर्तनं समायातम्। लहरीणां वेगेन तदा नौः अकम्पत। पश्यतोः एव तयोःनौका जलेन पूरिता जाता। नाविकः प्राध्यापकं सम्भ्रमेण अपृच्छत् - महाशय! किं भवान् तर्तुं जानाति? प्राध्यापकः नौकां जलपूरितां दृष्ट्वा भीतोऽवदत् - अहं तर्तुं न जानामि। नाविकः अवोचत्- यदि तर्तुं न जानाति, तदा भवतः सर्वं जीवनं वृथा जातम्। अहं तु बाहुभ्यां नदं तीर्त्वा पारं प्रयामि। किन्तु यदि भवान् अन्यथा न मन्यते, अहं भवन्तं स्वपृष्ठमारोप्य पारगन्तुमिच्छामि।*

**शब्दार्थः**

*विहर्तुम् = घूमने के लिए। नावम् = नाव पर। आरूढः = बैठ गया। जलविहारम् = जलविहार। वीचीनाम्= तरङ्गों का। अम्भसाम् = जल की। अरित्रम् = पतवार, डाँड़। चतुर्थांशः = चैथाई भाग। व्यर्थतां गतः = व्यर्थ चला गया। ईदृशम् = ऐसा। मे = मेरा। कुतः = कहाँ से। नूनम् = निश्चय ही।अर्धांशः = आधा हिस्सा। व्यर्थतां नीतः = व्यर्थ कर दिया। अनुभवन् = अनुभव करता हुआ।प्रेषितः = भेजा गया। त्रयो भागाः = तीन भाग। अपार्थाः = व्यर्थ। नदे = नदी में। जलावर्तनम् = भँवर। अकम्पत = डगमगाने लगा। पश्यतः = देखते-देखते। जलेन = जल से। पूरिता = भर गयी।सम्भ्रमेण =*

*घबराहट के साथ। तर्तुम् = तैरने के लिए। भीतः = डरा हुआ। तीर्त्वा = तैरकर।प्रयामि = जाता हूँ। खलु = निश्चय ही। विहरतु = विहार करें। स्वपृष्ठमारोप्य = अपनी पीठ की सहायता से।*

## *अभ्यासः*

**1.** ***उच्चारणं कुरुत पुस्तिकायां च लिखत-***

***आरूढः जलावर्तनम् चतुर्थांशः***

***व्यर्थताम् तीर्त्वा अरित्रमाध्यमेन***

**2.** ***एकपदेन उत्तरत -***

(*क*) ***कः विहर्तुं नावम् आरूढः*** ?

(*ख*) ***नौकायाः अग्रेसारणं केन माध्यमेन भवति*** ?

(*ग*) ***कः ग्लानिम् अन्वभवत्*** ?

(*घ*) ***जलेन पूरिता का जाता*** ?

**3.** ***कः कथयति इति लिखत - नाविकः / प्राध्यापकः***

(*क*) ***भवता कदापि गणितं पठितम्*** ? (*ख*) ***ईदृशं मे भाग्यं कुतः*** ?

(*ग*) ***त्वया अर्धांशः जीवनस्य व्यर्थतां नीतः।***

(*घ*) ***अहं तर्तुं न जानामि।***

(*ङ*) ***यदि तर्तुं न जानाति, तदा भवतः सर्वं जीवनं वृथा जातम्।***

**4.** ***अधोलिखितधातुभिः तुमुन्-प्रत्ययं योजयित्वा पदरचनां कुरुत -***

*यथा-खाद् +तुमुन् = खादितुम्।*

*चल् + तुमुन् =*...........................

*हस् + तुमुन् =*...........................

*क्रीड् + तुमुन्=*...........................

*पठ् + तुमुन् =*...........................

5. *अधोलिखितधातुभिः 'त्वा' (क्त्वा) प्रत्ययं योजयित्वा पदरचनां कुरुत -*

*यथा- पठ् + त्वा = पठित्वा।*

*नी + त्वा =*...........................

*गम् + त्वा =*...........................

*लिख् + त्वा =*...........................

6. *हिन्दीभाषायाम् अनुवादं कुरुत -*

(*क*) *किं त्वया संस्कृत-भाषा पठिता* ?

(*ख*) *जीवनस्य त्रयो भागाः अपार्थाः।*

(*ग*) *प्राध्यापकः नावम् आरूढः।*

(*घ*) *भवान् खलु जलमध्ये विहरतु।*

7. *संस्कृतभाषायाम् अनुवादं कुरुत -*

(*क*) *वह पढ़ने के लिए आता है।*

(ख) *क्या तुम सब तैरना जानते हो* ?

(ग) *क्या तुम प्रतिदिन खेलते हो* ?

(घ) *हम दोनों घूमने के लिए नदी के किनारे जाते हैं।*

*शिक्षण-सङ्केतः*

1. *पाठस्य कथानकं छात्रैः लघुसमूहेषु समयं निश्चितं कृत्वा लेखयत।*

2. *कर्मवाच्ये कर्मणः लिङ्गानुसारं कृदन्त-क्रियापदानां लिङ्गस्य परिवर्तनं बोधयत।*

*स्मरणीयम्-*

*गच्छति शकटे मा आरोहेः।*

*चलतः शकटात् मा अवरोहेः।*

*दुष्टैः पुरुषैः सह मा गच्छेः।*

*कृत्वा कर्म झटिति आगच्छेः।*

*सहसा विदधीत न क्रियाम्।*

## सप्तमः पाठः

# सुभाषितानि

अयं निजः परो वेति गणना लघुचेतसाम्।

उदारचरितानां तु वसुधैव कुटुम्बकम्। 1।

सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्।

एतद् विद्यात् समासेन लक्षणं सुखदुःखयो। 2।

वृथा वृष्टिः समुद्रेषु वृथा तृप्तस्य भोजनम्।

वृथा दानं समर्थस्य वृथा दीपो दिवापि च। 3।

काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्।

व्यसनेन तु मूर्खाणां निद्रया कलहेन वा। 4।

महान्तं प्राप्य सद्बुद्धे संत्यजेन्न लघुजनम्।

यत्रास्ति सूचिकाकार्यं कृपाणः किं करिष्यति। 5।

| |

किं कुलेन विशालेन विद्याहीनस्य देहिनः।

विद्यावान् पूज्यते लोके नाविद्यः परिपूज्यते। 6।

वेशेन वपुषा वाचा विद्यया विनयेन च।

वकारैः पञ्चाभिर्युक्तो नरो भवति पूजितः। 7।

**शब्दार्थः**

निजः = अपना। परः = पराया, दूसरे का। लघुचेतसाम् = छोटे चित्तवालों का, अनुदार लोगों का।वसुधैव = (वसुधा+एव) सम्पूर्ण पृथ्वी ही। कुटुम्बकम् = परिवार (है)। परवशम् = दूसरों के वश में होना। आत्मवशम् = अपने अधीन। समासेन = संक्षेप में । विद्यात् = जानना चाहिए। समर्थस्य = भरे-पूरे, सशक्त के लिए। दिवा= दिन में । धीमताम् = बुद्धिमानों का। व्यसनेन = बुरी आदतों के द्वारा। निद्रया = सोने से। कलहेन = लड़ाई-झगड़ा से। सुचिका = सुई । कृपाणः = तलवार। देहिनः = जीव का। अविद्यः = विद्याहीन। वपुषा = शरीर से।

**अभ्यासः**

1. उच्चारणं कुरुत पुस्तिकायां च लिखत-

दुःखम्, मूर्खाणाम्, सुखदुःखयोः,

वृष्टिः , काव्यशास्त्रविनोदेन, पञ्चभिर्युक्तः,

**2. एकपदेन उत्तरत -**

(क) उदारचरितानां कृते सम्पूर्णा वसुधा किम् अस्ति ?

(ख) अयं निजः परो वेति कः गणयति ?

(ग) समुद्रेषु वृष्टिः कीदृशी भवति ?

(घ) विद्वान् कुत्र पूज्यते ?

**3. प्रश्नानामुत्तराणि लिखत -**

(क) सुखदुःखयो किं लक्षणम् अस्ति ?

(ख) पञ्चवकाराः के सन्ति ?

(ग) धीमतां कालः कथं गच्छति ?

(घ) दीपः वृथा कदा भवति ?

4. लघुचक्र मध्ये चत्वारि क्रियापदानि सन्ति। तानि द्विधा दीर्घचक्रस्थवाक्यांशैः प्रयुज्य सार्थकवाक्यानि रचयत-

.5. मञ्जूषातः -पदानि चित्वा वाक्यानि पूरयत-

वृथा तु गच्छति विद्यया सद्बुद्धे।

यथा- उदारचरितानाम् .......तु ............. वसुधैव कुटुम्बकम्।

(क) ..................... वृष्टिः समुद्रेषु।

(ख) महान्तं प्राप्य .....................।

(ग) मूर्खाणां समयः व्यसनेन निद्रया कलहेन .....................।

(घ) वेशेन वपुषा वाचा.................विनयेन च।

6. विलोमपदानि योजयत -

- निजः निर्बलः।

सबलः दुःखम्।

उदारः परः।

सुखम् अनुदारः।

**7. हिन्दीभाषायाम् अनुवादं कुरुत -**

*(क) सर्वं परवशं दुःखम् सर्वमात्मवशं सुखम्।*

*(ख) वृथा तृप्तस्य भोजनम्।*

*(ग) महान्तं प्राप्य सद्बुद्धे।*

*(घ) विद्यावान् पूज्यते लोके नाविद्यः परिपूज्यते।*

***ध्यातव्यम्* -**

***अस्मिन् पाठे वा, च, अपि इति, तु, एव, वृथा, सर्वत्र, वै, खलु अव्ययपदानि आगतानि सन्ति। एषां त्रिषु लिङ्गेषु त्रिषु वचनेषु सर्वासु विभक्तिषु च एकमेव रूपं भवति, अर्थात् रूप परिवर्तनं न भवति। अत एव अव्ययपदेन उच्यन्ते।***

**शरीरमाद्यं खलु धर्मसाधनम्।**

## अष्टमः पाठः

# ग्राम्य जीवनम्

ग्राम्य जीवनम् सुव्यवस्थितम भवति ।ग्रामे प्रायेण सर्वे स्वस्थः भवन्ति । वनेषु नगरेषु च तथा जीवनम न भवति ।वस्तुतः ग्रामः वननगरयोः मध्ये सन्ति ।ग्रामीणाः जनाः प्रायेण कृषी वलाः भवन्ति ते च प्रातः कालात सायं यावत् क्षेत्रेषु कर्म कुर्वन्ति .क्षेत्राणि सेक्तुं वारिणा पूर्णाः कुल्याः भवन्ति .कृषकाः क्षेत्राणि फलेन कर्षन्ति .कुल्या जलेन तानि सिंचति तत्र बीजानि वपन्ति च . ग्रामान परितः शस्यश्यामला धरित्री राजते .परिश्रम शीलः ग्रामीणः धान्यादिकम उत्पादयन्ति .वैज्ञानिकोपकरणानाम साहाय्येन इदानीम् कृषि व्यवसायः लाभप्रदः सञ्जातः .ग्राम पथिकानां गोपालानां च संगीतेन हृदयं प्रसन्नम् भवति .

वृक्षाः निःस्वार्थमेव फलम् छायां च प्रयच्छन्ति .ग्रामे शुकः -कपोत -मयूर -कोकिलादयः पक्षिणः कूजन्ति .अश्व -गो -महिष-मेषादयः पशवः च चरन्ति .ग्रामेषु मनोरञ्जनं अल्पव्ययसाध्यम भवति .धूल धूसरिताः बालकाः विविधाम क्रीड़ां कुर्वन्ति .जीवन रक्षणार्थम् अत्यन्तमुपयोगिनः वायु जलाधिकः ग्रामेषु प्रचुरं यथा लभ्यन्ते तथा न नगरेषु .ग्राम्य जीवनं सदाचार सम्पन्नम धार्मिकम् च भवति .ग्राम वासिनां मनांसि निर्मलानि भवन्ति . तत्रत्यं वातावरणं स्वच्छं भवति . प्राचीन काले ग्रामेषु तथा विधं शिक्षालय ,चिकित्सालयादीनां सौविध्यं नासीत् यथा अद्यास्ति ,तथापि अधुना ग्रामेषु सकलानि साधनानि यदि उप्लब्धानि भवेयुः तर्हि ग्राम्यजीवनं इतोऽपि सुकरं सुखकरं च भविष्यति तदर्थं ग्राम -निवासिभिः सम्भूय प्रयत्नः विधेयः

## शब्दार्थः

कृषीवलाः = किसान।क्षेत्रेषु = खेतों में। वारिणा = जल से। कुल्या = नहर। कर्षन्ति = जोतते हैं। वपन्ति = बोते हैं। परितः = चारों ओर। प्रयच्छन्तः = प्रदान करते हुए। शस्यश्यामला = फसलां से हरित। कूजन्ति = कूजते हैं। सम्भूय = एक होकर।

सौविध्यम् = सुविधा। सुकरम् = सरल।राजते = सुशोभित होती है।

## अभ्यास

1. उच्चारणं कुरुत पुस्तिकायां च लिखत -

सुव्यवस्थितम् साहाय्येन अल्पव्ययसाध्यम्

निःस्वार्थमेव जीवनरक्षणार्थम् सौविध्यम्।

2. एकपदेन उत्तरत -

(क) कृषकाः क्षेत्राणि केन कर्षन्ति ?

(ख) निःस्वार्थमेव फलं छायाञ्च के प्रयच्छन्ति ?

(ग) ग्रामेषु अल्पव्ययसाध्यं किं भवति ?

(घ) ग्रामनिवासिभिः सम्भूय किं विधेयम् ?

3. पूर्णवाक्येन उत्तरत -

(क) ग्राम्यजीवनं कीदृशं भवति ?

(ख) क्षेत्रेषु जनाः कदा कार्यं कुर्वन्ति ?

(ग) प्राचीनकाले ग्रामेषु केषां सौविध्यं नासीत् ?

(घ) ग्राम्यजीवनं सुकरं कदा भविष्यति ?

4.मञ्जूषातः क्रियापदानि चित्वा वाक्यानि पूरयत-

उत्पादयन्ति , कर्षन्ति , कूजन्ति ,भवति ,लभ्यन्ते

(क) ग्राम्यजीवनं सुव्यवस्थितम् .......................।

(ख) कृषकाः क्षेत्राणि हलेन ................................।

(ग) ग्रामे शुक-कपोत-मयूर-कोकिलादयः पक्षिणः.......................।

(घ) परिश्रमशीलाः ग्रामीणाः धान्यादिकम्.......................।

(ङ) वायुजलादिकाः ग्रामेषु प्रचुरं......................।

5. संस्कृतभाषायाम् अनुवादं कुरुत -

(क) गाँव में लोग प्रायः स्वस्थ होते हैं। (ख) गाँव कृषिप्रधान होता है।

(ग) किसान खेत की जुताई करता है। (घ) किसान अन्न उपजाता है।

6. रेखाङ्कितपदानि आधृत्य प्रश्ननिर्माणं कुरुत -

(क) ग्रामे प्रायेण सर्वे स्वस्थाः भवन्ति।

(ख) ग्रामं परितः शस्यश्यामला धरित्री राजते।

(ग) धूलिधूसरिताः बालकाः विविधां क्रीडां कुर्वन्ति।

(घ) ग्रामवासिनां मनांसि निर्मलानि भवन्ति।

7. शुद्धकथनस्य समक्षम् 'आम्' अशुद्धकथनस्य समक्षम् 'न' इति लिखत -

(क) ग्रामपथिकानां गोपालानां सङ्गीतेन हृदयं प्रसन्नं भवति। (ख) वैज्ञानिकोपकरणानां साहाय्येन कृषिव्यापारः हानिकरः सञ्जातः। (ग) ग्राम्यजीवनं सदाचार-सम्पन्नं धार्मिकञ्च भवति। (घ) विकासाय ग्रामवासिभिः सम्भूय प्रयत्नः न विधेयः।

**शिक्षण-सङ्केतः**

*ग्राम्यजीवनस्य इतोऽपि सुखकरं सुकरं च निर्मातुं किं किं करणीयमिति लेखयत।*

*पशवः रक्षणीया इति चर्चा कारयत।*

*आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः।*

## नवमः पाठः

# भव्या भागीरथी

*हिमाद्रेः सम्भूता विहरसि तदङ्के हिममये,*

*ततो भूमिं याता विचरसि सुहासा समतले।*

*पुनासि त्वं लोकान् प्रवहसि समुद्रं प्रति सदा,*

*अहो दिव्ये गङ्गे! भवतु सुखदं नस्तव जलम्।* 1।

*न जाने किं पुण्यं फलितमधुना नो भगवति,*

*प्रियो देशो जातः तव जलकणैर्नष्टकलुषः।*

*हरिद्वारं काशी तव तटमहत्त्वं कथयतः,*

*प्रयागस्तीर्थानां पतिरतुलनीयस्तव तटे* । 2।

। 

*जनानां धात्री त्वं सुमधुर-फलान्नानि ददती,*

*विशालां सिञ्चन्ती मधुमयजलैर्भारतभुवम्।*

*अये शुभ्रे गङ्गे ! विलसिततरङ्गे ! त्रिपथगे!*

*तवोत्सङ्गे धन्याः शिशव इव खेलन्ति मनुजाः।* 3।

*पयस्ते कुल्याभिर्व्रजति बहु दूरं सुमधुरम्,*

*ततः सिक्तं क्षेत्रं भवति हरितं चापि ललितम्।*

*गभीरे ते नीरे तरणिषु सुखं यान्ति पथिकाः,*

*वयं भूयो भूयो जगति तव कृत्यैरुपकृताः।* 4।

*अये पुण्ये गङ्गे !जगति जननं चेन्मम पुनः,*

*भवेत् क्रीडाभूमिः पुनरपि शुभा भारतधरा।*

*सदा सेवे नीरं सुरनदि ! तवेदं सुखकरम्,*

*न मेऽन्या स्यादीहा तव तटविहारे विहरतः।* 5।

*हिमाद्रेः = हिमालय पर्वत से । सम्भूता = निकली हुई। सुहासा = सुन्दर हँसती हुई।*

पुनासि = पवित्र करती हो। धात्री = धारण करने वाली। त्रिपथगे = तीन मार्गों से जाने वाली (स्वर्गलोक, पृथ्वीलोक तथा पाताललोक मे बहने वाली) गङ्गा। उत्सङ्गे = गोद में। कुल्याभिः = नहरों से। व्रजति = जाती है। तरणिषु = नौकाओं में। ईहा = इच्छा। यान्ति = जाते हैं। चेत् = यदि।

## अभ्यासः

1. उच्चारणं कुरुत पुस्तिकायां च लिखत-

हिमाद्रेः , तदङ्के . जलकणैर्नष्टकलुषः ,फलान्नानि , मधुमयजलैर्भारतभुवम् , तवोत्सङ्गे , कुल्याभिर्व्रजति , क्रीडाभूमिः , कृत्यैरुपकृताः

2. एकपदेन उत्तरत -

(क) गङ्गा कुतः सम्भूता ?

(ख) तीर्थानां पतिः कः ?

(ग) गङ्गायाः पयः काभिः बहुदूरं व्रजति ?

(घ) गङ्गायाः गभीरे नीरे तरणिषु के सुखं यान्ति ?

(ङ) भागीरथी कान् पुनाति ?

3. पूर्णवाक्येन उत्तरत -

(क) गङ्गातटे कानि प्रसिद्धानि नगराणि स्थितानि ?

(ख) गङ्गा-जलात् सिक्तं क्षेत्रं कीदृशं भवति ?

(ग) गङ्गा कीदृशैः जलैः भारतभुवम् सिञ्चति ?

(घ) भागीरथ्याः उत्सङ्गे के शिशवः इव खेलन्ति ?

4. अधोलिखित-पदेषु सन्धि-विच्छेदं कुरुत -

मेऽन्या = ..... + ......

तवोत्सङ्गे = ....... + ....

मधुमयजलैर्भरितभुवम् = ........ + .....

तवेदम् = .....+ ......

5. संस्कृतभाषायाम् अनुवादं कुरुत -

(क) गंगा सभी नदियों में श्रेष्ठ है।

(ख) इसका जल शीतल एवं पवित्र है।

(ग)पर्यटक गंगा में नौका विहार करते हैं।

(घ) गंगा-तट पर बैठकर लोग तप करते हैं।

(ङ) वाराणसी में गंगा का तट बहुत सुन्दर है।

6- रेखाङ्कित-पदानि आधृत्य प्रश्न-निर्माणं कुरुत -

(क) गङ्गा हिमाद्रेरः सम्भूता।

(ख) गङ्गा लोकान् पुनाति ।

(ग) हरिद्वारं काशी तव तटमहत्त्वं कथयतः।

(घ) पयस्ते कुल्याभिः व्रजति।

7. अधोलिखित-पदान् समानार्थक-पदैः सह योजयत -

*गङ्गा हिमगिरिः*

*हिमालयः जलधिः*

*समुद्रः वारि*

*जलम् जाह्नवी*

***शिक्षण-सङ्केतः***

*(1) गङ्गायाः उत्पत्तिस्तथा तस्याः धरायाम् अवतरणवृत्तान्तं छात्रान् बोधयत।*

*(2) गङ्गामाधारीकृत्य प×च संस्कृत-वाक्यान् लेखनाय प्रेरयत।*

*(3) गङ्गायाः निर्मलीकरणाय प्रवर्तमानाः योजनाः अधिकृत्य चर्चा करणीय।*

---

## *एतदपि जानीत-*

*जलाशयानां नामानि-*

*सिन्धुः=समुद्र अल्पसरम्=तलैया*

*नदी=नदी तडागः=तालाब*

*कुसरित=छोटी नदी कूपः=कुँआ*

*कुल्या=नहर निर्झरः=झरना*

*पल्लवलम्=पोखरा कासारः=झील*

## दशमः पाठः

# शत्बुद्धि -सहस्रबुद्धि -कथा

कस्मिंश्चिद् जलाशये शत्बुद्धिः शत्बुद्धि -सहस्रबुद्धिश्चेति द्वौ मत्स्यौ निवसतः स्म .तयोः एकबुद्धिनामकेन मण्डूकेन मित्रताऽभवत .कदाचिज्जालहस्ताः धीवराः तं जलाशयमुपगताः .तेषु एको धीवरः अवदत् -एतस्मिन् जलाशये बहवो मत्स्याः सन्ति ,अतः तान् गृहीतुं श्वोऽत्र जालं क्षेप्स्यामः .तच्छुत्वा मत्स्याः दुःखिनः अभवन् .तेषु मण्डूकः प्राह -भोः शत्बुद्धे! श्रुतं धीवरोक्तं भवता .ततः किं कर्तव्यं ?पलायनम् अवष्टम्भो वा .सहस्रबुद्धिः अवदत् -मित्र मा भैषीः .केवलं वचन श्रवणादेव न भेतव्यम्

सर्पाणां च खलानां च सर्वेषां दुष्टचेतसाम्

अभिप्राया न सिध्यन्ति तेनेदं वर्तते जगत्

शत्बुद्धिरपि अकथयत् साधु उक्तं त्वया .त्वं सहस्रबुद्धिः असि .तव सदृशी बुद्धिः कस्यापि नास्ति .वचनमात्रेण स्वजन्मस्थानं न त्याज्यम्

अहम् त्वां सु बुद्धि प्रभावेण रक्षयिष्यामि .मण्डूक आह -भोः !मम त्वेका एव बुद्धिः .अहं तु अत्र न स्थास्यामि .अन्यं जलाशयं गमिष्यामि .एवमुक्त्वा सः अन्य जलाशयं गतः ततः प्रभाते धीवरैः आगत्य जाल मध्ये मत्स्य -कूर्म -मण्डूक-कर्कटादयो निगृहीताः .शत्बुद्धिसहस्रबुद्धिमत्स्यौ अपि निगृहीतौ ,अपराह्णे सुखं गच्छसु धीवरेषु एकस्य शिरसि आरोपितं शत्बुद्धिम् अपरस्य हस्ते प्रलम्बमानं सहस्रबुद्धिम् चालोक्य मण्डूकः स्वपत्नीम् कथयत् -

शत्बुद्धिः शिरस्थोऽयं लम्बते च सहस्रधीः

एकबुद्धिरहं भद्रे ! क्रीड़ामि विमले जले

पञ्च तंत्रः

## शब्दार्थः

मत्स्यौ = दो मछलियाँ। मण्डूकेन = मेढक से। जालहस्ताः धीवराः = हाथ में जाल लिये हुए मछुआरे। उपगताः = पहुँचे। श्वः = आने वाला कल। क्षेप्स्यामः = फेकेंगे। पलायनम् = भागना। अवष्टम्भः = रुकना। माभैषीः = मत डरो। न भेतव्यम् = नही डरना चाहिए। दुष्टचेतसाम् = दुष्ट हृदय वालों का। स्थास्यामि = रहूँगा। कूर्म-मण्डूक-कर्कटादयः = कछुआ, मेढक, केकड़े आदि। निगृहीतौ = (दोनों मछलियाँ) पकड़ ली गयीं। प्रलम्बमानम् = लटकते हुए। सहस्रधीः = हजार बुद्धि वाला। शिरःस्थः= सिर पर स्थित। लम्बते = लटक रहा है।

## अभ्यासः

1. उच्चारणं कुरुत पुस्तिकायां च लिखत -

कस्मिंश्चिद् मत्स्यौ कदाचिज्जालहस्ताः तच्छ्रुत्वा अवष्टम्भः श्वोऽत्र

2. एकपदेन उत्तरत -

(क) शतबुद्धिः सहस्रबुद्धिश्च कुत्र निवसतः स्म ?

(ख) जालहस्ताः धीवराः कम् उपगताः ?

(ग) कस्य एका बुद्धिरासीत् ?

(घ) जलाशये बहवः के सन्ति ?

3. कः उक्तवान् इति लिखत-(मण्डूकः/शतबुद्धिः/सहस्रबुद्धिः/धीवरः)

(क) एतस्मिन् जलाशये बहवः मत्स्याः सन्ति। .......................... (ख) केवलं

वचनश्रवणादेव न भेतव्यम्। ..........................

(ग) त्वं सहस्रबुद्धिः असि। ..........................

(घ) भोः! मम तु एका एव बुद्धिः। ..........................

4.मञ्जूषातः पदानि चित्वा वाक्यानि पूरयत-

क्षेप्स्यामः नास्ति रक्षयिष्यामि निवसतःस्म अवदत्

(क) द्वौ मत्स्यौ .........................

(ख) एको धीवरः .........................

(ग) श्वोऽत्र जालं .........................

(घ) तव सदृशी बुद्धिः कस्यापि .........................

(ङ) अहं त्वां सुबुद्धिप्रभावेण .........................

5. हिन्दीभाषायाम् अनुवादं कुरुत -

(क) तच्छ्रुत्वा मत्स्याः दुःखिनोऽभवन्।

(ख) अहं त्वां सुबुद्धिप्रभावेण रक्षयिष्यामि।

(ग) अहं तु अत्र न स्थास्यामि।

(घ) मण्डूकः स्वपत्नीम् अकथयत्।

6. समासविग्रहं कृत्वा समासस्य नाम लिखत -

सामासिकपदम्  समासविग्रहः  समास-नाम

*जलाशयः = जलस्य आशयः तत्पुरुषः।*

*जालमध्ये* = ........... ..........।

*स्वपत्नीम्* = ....... ........

*जन्मस्थानम्* = ............. .........

*मत्स्यकूर्ममण्डूकाः* = ......... ........।

7. *निम्नलिखित-पदानां विभक्तिं वचनं च लिखत -*

*पदम्* *विभक्तिः* *वचनम्*

*भवता* = *तृतीया* *एकवचनम्*।

*त्वया* = .....,.......

*तान्* = ........, ........

*धीवराः* = .........,...........

*सर्पाणाम्* = .........,........

*शिक्षण-सङ्केतः*

*प्रस्तुतकथां संक्षेपेण छात्रैः स्वशब्देषु लेखयत।*

*एतदपि जानीत-*

*वाहनों का संस्कृत में नाम-*

*सवारी यानम्*

*गाड़ी शकटः, शकटी*

*साइकिल द्विचक्रिका*

*बैलगाड़ी गन्त्री*

*हवाई जहाज वायुयानम्/विमानम्*

*जहाज पोतः, जलयानम्*

# एकादशः पाठ

# रामभरतयोः मेलनम्

(ततः प्रविशति भरतः रथेन सुमन्त्रः सूतश्च)

भरतः- भोः तात!

सुमन्त्रः-कुमार! अयमस्मि।

भरतः- क्व तत्र भवान् मम आर्यः रामः?

सुमन्त्रः-कुमार एतस्मिन् एव आश्रमे रामः सीता लक्ष्मणश्च स्थिताः।

भरतः- भोः तात! निवेद्यतां निवेद्यताम्।

सुमन्त्रः-कुमार! किमिति निवेद्यते ?

भरतः- राज्यलुब्धायाः कैकेय्याः पुत्रः भरतः प्राप्तः इति।

रामः- सर्वथा न अयम् अबान्धवस्य स्वरसंयोगः क्लेदयतीव मे हृदयम्। वत्स

लक्ष्मण! दृश्यतां तावत्!

लक्ष्मणः-यदाज्ञापयति आर्यः। (परिक्रामति) एहि एहि इक्ष्वाकु कुमार! स्वागतम्।

भरतः- अनुगृहीतोस्मि।

लक्ष्मणः- बाढम्। (उपेत्य) जयतु आर्यः।

अयं ते दयितो भ्राता भरतो भ्रातृवत्सलः।

संक्रान्तं यत्र ते रूपमादर्श इव तिष्ठति।

सीता- आर्यपुत्र किं भरतः आगतः ?

रामः- सत्कृत्य शीघ्रं प्रवेश्यतां कुमारः।सीता स्वयं गच्छतु।

सीता- यदार्यपुत्र आज्ञापयति। (उत्थाय परिक्रामति)

भरतः- आर्ये! अभिवादये, भरतोहमस्मि।

सीता- चिरं जीव! एहि वत्स भ्रातृमनोरथं पूरय।

भरतः- (राममुपगम्य) आर्य! अभिवादये, भरतोहमस्मि।

रामः- (सहर्षम्) स्वस्ति आयुष्मान् भव! सुविपुलेन भुजद्वयेन माम् अलिङ्.ग।

भरतः- अनुगृहीतोस्मि। प्रसीदतु आर्यः।

सुमन्त्रः- अथेदानीम् अभिषेकोदकं क्व तिष्ठतु।

रामः- यत्र में मात्रोभिहितं , तत्रैव तावत् तिष्ठतु।

भरतः- हन्त! अनुत्तरमभिहितम्। परं तु मम हस्ते निक्षिप्तं तव राज्यं चतुर्दश वर्षान्ते प्रतिग्रहीतुमिच्छामि।

रामः- एवमस्तु।

भरतः- आर्य! अन्यमपि वरं इच्छामि।

रामः- वत्स! किम् इच्छसि ? किम् अहं ददामि ?

भरतः- पादोपभुक्ते एते तव पादुके मे प्रयच्छ।

रामः- तथास्तु। वत्स! गृह्यताम्।

**शब्दार्थः**

मेलनम् - मिलन। निवेद्यताम् -सूचित किया जाय। राज्यलुब्धायाः - राज्य का लोभी। स्वरसंयोगः -आवाज का संयोग। क्लेदयति -आर्द्र या गीला करता है। बाढमत्र -बहुत अच्छा। उपेत्य - आकर। दयितः प्रिय। भ्रातृवत्सल -भाई के प्रति स्नेह रखने वाला। संक्रान्तम् -प्रतिफलित या प्रतिबिम्बित। रूपम्- छवि/प्रतिबिम्ब। आदर्शः -दर्पण। तिष्ठति स्थित है। अभिषेकोदकम् -अभिषेक हेतु जल। तिष्ठतु - रखा जाय(डाला जाय)। मात्रोभिहितम् - माता के लिए। प्रतिग्रहीतुम् - स्वीकार करने हेतु। पादोपभुक्ते -पैरों में पहना हुआ। पादुके -दोनों खड़ाऊँ। प्रयच्छ - दे दीजिए।

1-उच्चारणं कुरुत पुस्तिकायां च लिखत-

राज्यलुब्धायाः क्लेदयतीव इक्ष्वाकुकुमारः

अनुगृहीतोस्मि अनुत्तरमभिहितम् चतुर्दशवर्षान्ते

2. एकपदेन उत्तरत-

(क) रामः सीता लक्ष्मणश्च कुतः स्थिताः आसन् ?

(ख) पितुः नियोगात् कः वनम् आगतः ?

(ग) अन्यमपि वरं कः इष्टवान् ?

(घ) पादोपभुक्तौ चरणपादुकौ कः अयाचत ?

3. पूर्णवाक्येन उत्तरत-

(क) भोः तात! निवेद्यतां निवेद्यतां कः उक्तावन् ?

(ख) भरतः कस्याः पुत्रः आसीत् ?

(ग) लक्ष्मणेन भरतस्य स्वागताय किम् अकथयत् ?

(घ) सीतायाः भरतं प्रति कः आशीषः आसीत् ?

4. संस्कृतभाषायाम् अनुवादं कुरुत-

(क) दूसरा वर भी प्राप्त करना चाहता हूँ।

(ख) राम सीता व लक्ष्मण इस आश्रम में रहते हैं।

(ग) भरत आ गये।

(घ) मैं अनुगृहीत हुआ।

5. अधोलिखितवाक्येषु रेखांकितपदानि आधृत्य प्रश्ननिर्माणं कुरुत-

(क) आश्रमे एव रामः सीता लक्ष्मणश्च स्थिताः।

(ख) एहि वत्स भ्रातृमनोरथं पूरय।

(ग) अन्यमपि वरम् इच्छामि।

(घ) तव पादुके प्रणताय मे प्रयच्छ।

6. अधोलिखितपदेषु सन्धिं कृत्वा लिखत-

(क) *अयम्+अस्मि* ..............................

(ख) *सु+आगतम्* ..............................

(ग) *अथ+इदानीम्* ..............................

(घ) *अभिषेक+उदकम्* ..............................

***7-अधोलिखितानि पदानि प्रयुज्य वाक्यरचनां कुरुत-***

***यथा- भरतः भरतः भ्रातृवत्सलः आसीत्।***

(क) ***अनुगृहीत***

(ख) ***स्वागतम्***

(ग) ***वरम्***

(घ) ***अन्यमपि***

***शिक्षणसङ्.केत***

***रामभरतयोः मेलनस्य कथां संक्षेपेण श्रावयत।***

## द्वादशः पाठ

# प्रियं भारतम्

*प्रकृत्या सुरम्यं विशालं प्रकामम्,*

*सरित्तारहारैः ललामं निकामम्।*

*हिमाद्रिर्ललाटे, पदे चैव सिन्धुः,*

*प्रियं भारतं सर्वथा दर्शनीयम्।* 1।

*धनानां निधानं धरायां प्रधानम्,*

*इदं भारतं देवलोकेन तुल्यम्।*

*यशो यस्य शुभ्रं विदेशेषु गीतम्,*

*प्रियं भारतं तत् सदा पूजनीयम्।* 2।

*अनेके प्रदेशाः अनेके च वेषाः,*

अनेकानि रूपाणि भाषा अनेकाः।

परं यत्र सर्वे वयं भारतीयाः,

प्रियं भारतं तत् सदा रक्षणीयम्। 3।

।

वयं भारतीयाः स्वदेशं नमामः,

परं धर्ममेकं सदा मानयामः।

तदर्थं धनं जीवनं चार्पयामः,

प्रियं भारतं मे सदा वन्दनीयम्। 4।

**शब्दार्थः**

सुरम्यम् = सुन्दर, रमणीय। प्रकामम् = अत्यन्त ललामम् = सुन्दर। निकामम् = अत्यधिक। सरित्तारहारैः = नदी रूपी उज्वल हारों से। हिमाद्रि= हिमालय - हिम का अद्रि (पर्वत)। ललाटे= भाल पर। पदे = पद तल में।सिन्धुः = समुद्र। सर्वथा = हर तरह से। दर्शनीयम् = देखने योग्य।निधानम् = भाण्डार।धरायाम् = पृथ्वी पर। शुभ्रम् = उज्वल। अनेके = बहुत से । नमामः= (हम) प्रणाम करते हैं ।तदर्थम् = उसके लिए।

**अभ्यासः**

1. *उच्चारणं कुरुत पुस्तिकायां च लिखत-*

*प्रकृत्या सरित्तारहारैः हिमाद्रिर्ललाटे*

*शुभ्रम् रक्षणीयम् चार्पयामः*

2. *एकपदेन उत्तरत -*

(*क*) *भारतस्य ललाटे किमस्ति* ?

(*ख*) *कस्य शुभ्रं यशः विदेशेषु गीतम् अस्ति* ?

(*ग*) *भारते कियन्तः वेषाः सन्ति* ?

(*घ*) *वयं भारतीयाः कं नमामः* ?

3. *पूर्णवाक्येन उत्तरत -*

(*क*) *भारते कियन्तः प्रदेशाः कियत्यश्च भाषाः सन्ति* ?

(*ख*) *इदं भारतं कस्य निधानं केन च तुल्यम्* ?

(*ग*) *वयं भारतीयाः किं किम् अर्पयामः* ?

(*घ*) *वयं सदा कं धर्मं मानयामः* ?

4. *संस्कृते अनुवादं कुरुत -*

(*क*) *प्रिय भारत सर्वथा दर्शनीय है*।

(*ख*) *भारत देवलोक के समान है*।

(*ग*) *इसमें बहुत से प्रदेश हैं* ।

(घ) *हम भारतीय अपने देश को प्रणाम करते हैं।*

5\. *मञ्जूषातः पदानि चित्वा वाक्यानि पूरयत-*

*अर्पयामः देवलोकेन स्वदेशम् अनेकाः सर्वथा*

(क) *प्रियं भारतं* ............... *दर्शनीयम्।*

(ख) *इदं भारतं* .................... *तुल्यम*

(ग) *अनेकानि रूपाणि*, *भाषा* ..................... ।

(घ) *वयं भारतीयाः* .................... *नमामः।*

(ङ) *तदर्थं धनं जीवनं च* .......................।

**7.** *विशेष्यैः सह यथायोग्यं विशेषणानि योजयत* **-**

*विशेष्यम् विशेषणम्*

*यथा- भारतम् अनेकाः*

*यशः अनेके*

*भाषाः प्रियम्*

*प्रदेशाः शुभ्रम्*

**8.** *अनीयर् (अनीय) प्रत्ययं योजयित्वा पदानि लिखत* **-**

*धातुः प्रत्ययः पदम्*

*यथा- दृश् + अनीयर् = दर्शनीयम्*

*पूज् + अनीयर् = ..................*

*पठ्+ अनीयर् = ..................*

*वन्द् + अनीयर् = ..................*

*कथ्+ अनीयर् = ..................*

**शिक्षण-सङ्केतः**

*सर्वेषां श्लोकानां सस्वर-गानं कारयत।*

*एतदपि जानीत- कुछ माप (तौल) का संस्कृत नाम-*

*पाव = कुडवः*

*सेर = सेरः, प्रस्थः*

*पैसा = पणः*

## त्रयोदशः पाठः

# वीरोऽभिमन्युः

महाभारतस्य युद्धम् अष्टादश दिनानि यावत् प्राचलत् । आदौ कौरवपक्षे पितामहः भीष्मः सेनापतिः अभवत् ।दश दिनानि स युदधम् अकरोत् .। ततः एकादशे दिवसे द्रोणाचार्यः सेनापतिःअभवत् । स पञ्च दिनानि सेनापतिः अभवत् । पञ्चदशे दिवसे सः वीरगतिम् प्राप्तवान् .। तदनन्तरम् कर्णः दिनद्वयपर्यन्तं सेनापतिः अभवत् । तस्मिन् वीर गतिं प्राप्ते अर्धं दिनं मातुलः शल्यः युद्धं कृतवान् । शेषे दिवसार्धे भीम दुर्योधनयोः गदायुद्धं अभवत् ।अस्य ऐतिहासिकस्य महायुद्धस्य त्रयोदशे दिने यदा द्रोणाचार्यः कौरवपक्षस्य सेनापतिः आसीत् ,तदा दुर्योधनः स्वविजयाय द्रोणाचार्यम् अतितरां प्रार्थितवान् ।. द्रोणाचार्यः अकथयत्-यदि अर्जुनः युद्धे कदाचित् सन्निहितं न भवेत् ,तदा नूनं तव जयो भवेत् .। इति श्रुत्वा दुर्योधन पक्षीयाः संशप्तनामकः वीरवराः अर्जुनं युद्धाय आहूय अन्यत्र दूरं नीतवंतः .। 'अयमेव अवसरः' इति मत्वा द्रोणाचार्यः चक्रव्यूहं रचितवान् ,यस्य भेदनं पाण्डव पक्षे कोऽपि अर्जुनादन्यः न अजानात् । महाराजो युधिष्ठिरः अत्यन्तम् उद्विग्नोऽभवत् ।तदानीम् अर्जुनपुत्रःअभिमन्युः युद्धक्षेत्रम् प्रति प्रस्तिथः ,यतः सः चक्रव्यूहभेदनविधिम् अजानात् । .किन्तु चक्रव्यूहद्वारे स्वपित्रष्वसुः पतिः सिन्धुराजो जयद्रथः युधिष्ठिर -भीम -सहदेव -नाकुलान् अवरुद्धवान् । .अभिमन्युः एकाकी चक्रव्यूहमध्ये प्रविश्य अतीव पराक्रमेण युद्धं कृत्वा बहून् वीरान हतवान् ।.हा धिक् !अन्ते द्रोणः ,कृपः ,कर्णः ,अश्वत्थामा ,वृहद् बलः,कृतवर्मा ,जयद्रथश्च सप्त योद्धारः सम्मिल्य अभिमन्युं निःशस्त्रं कृत्वा एकाकिनं हतवन्तः । .अभिमन्युः वीरगतिं लब्ध्वा अमरोऽभवत् ।

### अभ्यासः

1. उच्चारणं कुरुत पुस्तिकायां च लिखत -

युद्धम् भीष्मः दिनद्वयपर्यन्तम्

*भीमदुर्योधनयोः ऐतिहासिकस्य संशप्तकनामकाः*

*उद्विग्नोऽभवत् स्वपितृष्वसुः प्रविश्य*

2. *एकपदेन उत्तरत-*

(*क*) *कौरवपक्षे कः प्रथमं सेनापतिः अभवत्* ?

(*ख*) *द्रोणाचार्यः कति दिनानि सेनापतिः आसीत्* ?

(*ग*) *एकादशे दिवसे कः सेनापतिः अभवत्* ?

(*घ*) *अर्जुनं विहाय चक्रव्यूह-भेदन-विधिं कः अजानात्* ?

3. *पूर्णवाक्येन उत्तरत-*

(*क*) *महाभारतस्य युद्धं कति दिनानि यावत् प्राचलत्* ?

(*ख*) *त्रयोदशे दिने कः सेनापतिः आसीत्* ?

(*ग*) *द्रोणाचार्यः विजयाय किं रचितवान्* ?

(*घ*) *चक्रव्यूहद्वारे पाण्डवान् कः अवरुद्धवान्* ?

4. *अधोलिखित-पदानां विभक्ति-वचनं लिखत-*

*पदम् विभक्तिः वचनम्*

*यथा- मोहनम् द्वितीया एकवचन*

*ऐतिहासिकस्य* ............ ...................

*विजयाय* ............ ...................

स्वपितृष्वसुः ............ ...................

पराक्रमेण ............ ...................

5. अधोलिखितपदानि समानार्थकैः पदैः सह योजयत-

युद्धम् चमूपतिः

दिनानि दिवसाः

सेनापतिः एकलः

एकाकी मारितवान्

हतवान् समरः

6. अधोलिखितवाक्यानि संशोधयत -

(क) द्रोणाचार्यः सेनापतिः आसन्।

(ख) सः पञ्चदिनम् सेनापतिः आसीत्।

(ग) तौ वीरगतिं प्राप्तवान्।

(घ) दुर्योधनः स्वविजयः द्रोणाचार्यं प्रार्थितवान्।

(ङ) अभिमन्युः वीरगतौ लब्धवान्।

7. संस्कृतभाषायाम् अनुवादं कुरुत -

(क) वीर अभिमन्यु अर्जुन का पुत्र था।

(ख) वह अकेले सात महारथियों से लड़ा।

(ग) *जयद्रथ ने अन्याय से अभिमन्यु का वध किया था।*

(घ) *अतः अर्जुन ने जयद्रथ के वध की प्रतिज्ञा की।*

*स्मरणीयम्-*

1- *धीरो भव वीरो भव।*

*शिष्टो भव सभ्यो भव।*

*हृष्टो भव पुष्टो भव।*

*सौम्यो भव शान्तो भव।*

2- *स्नानं कुरु ध्यानं कुरु।*

*मधुरं जलपानं कुरु।*

*पठने अवधानं कुरु।*

*हीन-जने मानं कुरु।*

*दीन-जने दानं कुरु।*

*जन-जन सम्मानं कुरु।*

*शिक्षण-सङ्केतः*

*चक्रव्यूहभेदनप्रसङ्गं बालकान् संक्षेपेण श्रावयत।*

## चतुर्दशः पाठः

# वाराणसी नगरी

*अस्माकं देशे बहूनि तीर्थस्थानानि सन्ति। तेषु वाराणसी एकं प्रसिद्धं तीर्थस्थानम् अस्ति। इदं काशीनाम्नापि प्रसिद्धं वर्तते। अनेकेषु प्राचीनग्रन्थेषु अस्य महिमा वर्णितः। स्कन्दपुराणस्य काशीखण्डे अस्याः वाराणस्याः विस्तरेण वर्णनं विहितम्।इयं नगरी गङ्गायाः पवित्रे तटे विराजमाना अस्ति। अत्रैव विश्वनाथस्य प्रसिद्धं मन्दिरम् अस्ति। अन्यानि अपि बहूनि देवमन्दिराणि सन्ति यथा संकटमोचन-मन्दिरम्, नवीनविश्वनाथ-मन्दिरम्, दुर्गा-मन्दिरम्,कालभैरव-मन्दिरम्, तुलसीमानस-मन्दिरम् च वाराणस्यां गङ्गा उत्तरवाहिनी जाता, तस्याः तीरे अनेके मनोहराः घट्टाः सन्ति। अस्याः प्रसिद्धेषु घट्टेषु दशाश्वमेध-राजेन्द्रप्रसाद-तुलसी-पञ्च गङ्गघट्टाः अन्यतमाः सन्ति, यत्र प्रातः सन्ध्याकाले च महान् जनसमुदायः आयाति। तत्र केचन स्नान्ति, केचन सन्ध्यावन्दनं कुर्वन्ति, केचन कथां शृण्वन्ति, केचन नौकासु विहरन्ति च। अत्रैव एकं पिशाचमोचनं नामकं तीर्थमस्ति, यत्र यात्रिणः आगत्य पितॄणां श्राद्धक्रियां कुर्वन्ति। शिवरात्रिदिने अत्र विशेषरूपेण मेला लगति। ग्रहणसमये अपि अत्र महान् जनसमुदायः आगच्छति। अत्र गङ्गायां स्नानाय श्रीविश्वनाथस्य दर्शनाय च सदैव भिन्न-भिन्न-प्रदेशेभ्यः जनाः आगच्छन्ति।वाराणसी भारतस्य सुप्रसिद्धं*

पुरातनं विद्याकेन्द्रमपि अस्ति। अत्र प्राचीनकालात् पठनपाठनयोः परम्परा राजते। अत्र अनेके विख्याताः पण्डिताः जाताः। अद्यापि अत्रत्यानां पण्डितानां देशे विदेशे प्रतिष्ठा भवति। विश्वविख्यातः काशी-हिन्दू-विश्वविद्यालयः अत्रैव विराजते। संस्कृत-शिक्षायाः प्रसिद्धं केन्द्रं सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः अत्रैव अस्ति।अत्रैव महात्मा-गान्धी-काशी-विद्यापीठम् अपि अत्रैव अस्ति।अत्र अनेकानि पर्यटनस्थलानि सन्ति। विश्वप्रसिद्धं सारनाथस्थितं बौद्धमन्दिरम् इहैव अस्ति। यत्र भगवान् बुद्धः प्रथमं ज्ञानोपदेशं शिष्येभ्यः अददात्। अत्रैव 'भारतमाता' इति नामकं मन्दिरम् अपि अस्ति। वाराणसी अस्माकं पवित्रं तीर्थस्थानम्, विद्यायाः विश्वविख्यातं केन्द्रम्, तुलसीदासस्य, कबीरदासस्य रविदासस्य च साधनाभूमिः तथा मुमुक्षूणां मुक्तिदायिनी नगरी अस्ति।

## शब्दार्थः

विराजमाना = स्थित पुरातनम् = प्राचीन। अत्रत्य = यहाँ के। अत्रैव = यहीं। विराजते = सुशोभित है। विस्तरेण= विस्तार से। इहैव = यहीं पर। मुमुक्षू = मोक्ष का इच्छुक।

## अभ्यासः

1. उच्चारणं कुरुत पुस्तिकायां च लिखत-

काशीनाम्नापि स्कन्दपुराणस्य विद्याकेन्द्रमपि

मुमुक्षूणाम् शृण्वन्ति प×चगङ्गाघट्टः

2. पूर्णवाक्येन उत्तरत -

(क) इयं नगरी कस्याः पवित्रतटे विराजमाना अस्ति ?

(ख) पितृणां श्राद्धक्रिया कुत्र भवति ?

(ग) भारतमाता-मन्दिरं कुत्र अस्ति ?

(घ) *भगवान् बुद्धः शिष्येभ्यः प्रथमज्ञानोपदेशं कुत्र अददात्* ?

3. *मञ्जूषातः पदानि चित्वा वाक्यानि पूरयत -*

*जनसमुदायः विद्याकेन्द्रमपि विश्वनाथस्य मनोहराः काशीखण्डे*

(क) *स्कन्दपुराणस्य* ....................... *अस्याः वाराणस्याः विस्तरेण वर्णनं वर्तते*।

(ख) *अत्रैव* ..................... *प्रसिद्धं मन्दिरम् अस्ति*।

(ग) *वाराणस्यां गङ्गायाः तीरे अनेके* ..................... *घट्टाः सन्ति*।

(घ) *ग्रहणसमये अपि अत्र महान्* .................... *एकत्र भवति*।

(ङ) *वाराणसी भारतस्य सुप्रसिद्धं पुरातनं* ...................... *अस्ति*।

4. *अधोलिखितानि पदानि आधृत्य वाक्यानि रचयत -*

*यथा-फलानि मालाकारः फलानि गृहीत्वा आपणं गच्छति*।

(क) *तीर्थस्थानानि* ..................

(ख) *बहूनि* ............................

(ग) *अनेकानि* .................................

(घ) *मन्दिराणि* ................................

5. *भिन्नवर्गस्य पदं चिनुत- भिन्नवर्गः*

*यथा- मयूराः, चटकाः, लताः, शुकाः।* <u>*लताः*</u>

(क) *पुस्तकम्, कलमः, मित्रम्, चित्रम्*। .....................

(ख) जलचरः, भूचरः, खेचरः, निशाचरः। .....................

(ग) शिक्षिका, अध्यापिका, उपदेशिका, पुस्तिका। .....................

(घ) तीर्थस्थानानि, घट्टानि, मन्दिराणि, मनोहराणि। .....................

6. रेखाङ्कितपदानि आधृत्य प्रश्ननिर्माणं कुरुत -

यथा- वाराणस्यां गङ्गा उत्तरवाहिनी जाता। वाराणस्यां काउत्तरवाहिनी जाता ?

(क) अत्रैव विश्वनाथस्य प्रसिद्धं मन्दिरम् अस्ति।

(ख) शिक्षायाः विश्वविख्यातं केन्द्रं हिन्दूविश्वविद्यालयः अस्ति।

(ग) भगवान् बुद्धः प्रथमं ज्ञानोपदेशं शिष्येभ्यः अददात्।

(घ) वाराणसी अस्माकं पवित्रं तीर्थस्थानम् अस्ति।

7. उदाहरणानुसारं रूपाणि लिखत -

विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्

प्रथमा पयः पयसी पयांसि

यशः ............ ..............

द्वितीया फलम् फले फलानि

वनम् ............ ..............

तृतीया केन काभ्याम् कैः

तेन ............ ..............

*चतुर्थी <u>मधुने</u> मधुभ्याम् मधुभ्यः*

*<u>वस्तुने</u>* ............ ..............

*पञ्चमी <u>वारिणः</u> वारिभ्याम् वारिभ्यः*

*<u>अस्थिनः</u>* ............ ..............

*षष्ठी <u>मुखस्य</u> मुखयोः मुखानाम्*

*<u>तृणस्य</u>* ............ ..............

*सप्तमी <u>मित्रे</u> मित्रयोः मित्रेषु*

*<u>ज्ञाने</u>* ............ ..............

**शिक्षण-सङ्केतः**

*<u>(1) अस्मिन् पाठे वर्णितानां विश्वविद्यालयानां मन्दिराणां, प्रमुखघट्टानाच विषये छात्रान् बो</u>*

# पञ्च दशः पाठः

# गीतावचनामृतानि

*त्वमादिदेवः पुरुषः पुराणः,*

*त्वमस्य विश्वस्य परं निधानम्।*

*वेत्तासि वेद्यं च परं च धाम,*

*त्वया ततं विश्वमनन्तरूप।* 1।

*यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।*

*अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्।* 2।

*परित्राणाय साधूनां विनाशाय च दुष्कृताम्।*

*धर्मसंस्थापनार्थाय सम्भवामि युगे युगे।* 3।

*सुखदुःखे समे कृत्वा, लाभालाभौ जयाजयौ।*

*ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि।* 4।

*वासांसि जीर्णानि यथा विहाय,*

*नवानि गृह्णाति नरोऽपराणि।*

*तथा शरीराणि विहाय जीर्णा -*

*न्यन्यानि संयाति नवानि देही।* 5।

*नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।*

*न चैनं क्लेदयन्त्यापो न शोषयति मारुतः।* 6।

*कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।*

*मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्मणि।* 7।

## *शब्दार्थः*

*परम् = सबसे बड़े। वेत्ता = जानकार। वेद्यम् = जानने योग्य। ततम् = फैलाया। ग्लानिः = हानि। अभ्युत्थानम् = बढ़ना, वृद्धि। आत्मानम्= अपने आपको। सृजामि = पैदा करता हूँ, प्रकट करता हूँ। परित्राणाय = रक्षा करने के लिए। दुष्कृताम् = पापियों के। संस्थापनार्थाय = स्थापना के लिए। सम्भवामि =उत्पन्न होता हूँ। कर्मणि = कर्म में। कदाचन = कभी। सङ्गः = आसक्ति। अकर्मणि = अकर्म में। वासांसि = कपड़े। जीर्णानि = पुराने। विहाय= त्यागकर, छोड़कर। अपराणि = दूसरे। संयाति = जाता है, प्रवेश करता है। देही = आत्मा (जो शरीर में रहे)। एनम् = इसको (आत्मा को)। छिन्दन्ति = काटते हैं। शस्त्राणि = हथियार। दहति = जलाता है। आपः = जल। क्लेदयन्ति = गीला करता है। शोषयति = सुखाता है। युज्यस्व = तैयार हो जाओ। अवाप्स्यसि = पाओगे, प्राप्त करोगे।*

## *अन्वयः*

1. *हे अनन्तरूप! त्वं आदिदेवः, पुराणः पुरुषः (असि) त्वम् अस्य विश्वस्य परं*

*निधानम्* (*असि*) *त्वं वेत्ता वेद्यं च* (*असि*) *त्वं परं धाम* (*असि*) (*हे अनन्तरूप*!) *त्वया विश्वं च ततम्*।

2. *हे भारत*! *यदा यदा हि धर्मस्य ग्लानिः* (*भवति*) *अधर्मस्य अभ्युत्थानं भवति तदा अहम् आत्मानं सृजामि*।

3. (*अहं*) *युगे युगे साधूनां परित्राणाय*, *दुष्कृतां विनाशाय*, *धर्मसंस्थापनार्थाय च सम्भवामि*।

4. *लाभालाभौ*, *जयाजयौ*, *सुखदुःखे समे कृत्वा ततः युद्धाय युज्यस्व* । *एवं पापं न अवाप्स्यसि*।

5. *यथा नरः जीर्णानि वासांसि विहाय अपराणि नवानि* (*वासांसि*) *गृह्णाति तथा देही जीर्णानि शरीराणि विहाय नवानि* (*शरीराणि*) *संयाति*।

6. *शस्त्राणि एनं न छिन्दन्ति*, *पावकः एनं न दहति*। *आपः एनं न क्लेदयन्ति*, *मारुतः एनं न शोषयति*।

7. *कर्मणि एव ते अधिकारः फलेषु कदाचन मा*। *त्वं कर्मफलहेतुः मा भूः*। *अकर्मणि ते सङ्गः अपि मा अस्तु*।

## *अभ्यासः*

**1.** ***उच्चारणं कुरुत पुस्तिकायां च लिखत -***

*पुरुषः वेत्तासि विश्वमनन्तरूप सङ्गोऽस्त्वकर्मणि*

*अभ्युत्थानमधर्मस्य सृजाम्यहम् धर्मसंस्थापनार्थाय कर्मफलहेतुर्भूः*

**2.** ***एकपदेन उत्तरत -***

(*क*) *पुराणः पुरुषः कः* ?

(ख) अस्माकं कुत्र अधिकारः अस्ति ?

(ग) केषां परित्राणाय ईश्वरः सम्भवति ?

(घ) शस्त्राणि कं न छिन्दन्ति ?

3. पूर्णवाक्येन उत्तरत -

(क) परमात्मा आत्मानं कदा सृजति ?

(ख) कम् आपः न क्लेदयन्ति ?

(ग) जीर्णानि शरीराणि विहाय कः संयाति ?

(घ) पावकः कं न दहति ?

4. निम्नाङ्किकत-पदेषु सन्धिं कृत्वा तस्य नाम लिखत -

सन्धिः नाम

यथा- बालक+अवदत् = बालकोऽवदत् पूर्वरूपसन्धिः

नरः+अपराणि = ......., .........

वेत्ता+असि = ..........,.............

कर्मणि+एव = ...........,...........

ग्लानिः+भवति = .........,..........

सृजामि+अहम् = ........., ........

5. अधोलिखित-पदेषु शब्दं विभक्तिं वचनं च लिखत -

*पदम् शब्दः विभक्तिः वचनम्*

*त्वम् युष्मद् प्रथमा एकवचनम्*

*साधूनाम्* ..........................

*धर्मस्य* ..........................

*फलेषु* ..........................

*आत्मानम्* ..........................

*शरीराणि* ..........................

6. *अधोलिखित-विशेष्यैः सह विशेषणानि योजयत* -

*विशेष्यम् विशेषणम्*

*पुरुषः परं*

*शरीराणि पुराणः*

*निधानम् जीर्णानि*

7. *संस्कृतभाषयाम् अनुवादं कुरुत*-

(*क*) *जल इसको गीला नहीं करता है।*

(*ख*) *धर्म की स्थापना के लिए मैं जन्म लेता हूँ।*

(*ग*) *सुख-दुःख को समान मानकर युद्ध के लिए तैयार हो।*

<u>*स्मरणीयम्*-</u>

*महात्मा गान्धिः गीताविषये एव वदन्ति-*

"*गीता तत्त्वोपदेशग्रन्थमात्रं न। इदं महत्त्वपूर्णं धर्मविषयकं किंचन काव्यम्। यः अत्र यथा यथा अधिकं गाहते तथा तथा पुष्कलः अर्थः तेन प्राप्यते। इदं महान्तं जनसमूहं उद्दिश्य एव रचितम्। अत्र रुचिरा पुनरुक्तिः दृश्यते।*"

***शिक्षण-सङ्केतः***

*(1) सर्वेषां श्लोकानां सस्वरवाचनं कारयत।*

*(2) कृष्णार्जुनसंवादस्य प्रसङ्गं संक्षेपेण श्रावयत।*

षोडशः पाठः

## अभ्यासः

1. उच्चारणं कुरुत पुस्तिकायां च लिखत -

व्यवस्थितरीत्या अतिक्रमणकारिणां विषमपरिस्थितौ

सीमानियन्त्रणरेखायाः भारतीयसैन्यबलेन प्राणोत्सर्गम्

2. एकपदेन उत्तरत -

(क) कारगिलस्थलं कस्मिन् राज्ये अस्ति ?

(ख) भारतीयगुप्तचरविभागीयैः कस्य देशस्य विमानं दृष्टमासीत् ?

(ग) शान्तिप्रियाः के सन्ति ?

(घ) सगौरवं वयं कान् स्मरामः ?

3. पूर्णवाक्येन उत्तरत -

(क) करगिल-युद्धं कस्मिन् वर्षे अभवत् ?

(ख) पाकिस्तानस्य विमानं कुत्र दृष्टमासीत् ?

(ग) आरम्भे पाकिस्तानं किं न अङ्ग्यकरोत् ?

(घ) केषाम् आत्मबलिदानं व्यर्थं न भवेत्?

4. रेखांकितपदानि अवलम्ब्य प्रश्ननिर्माणं कुरुत -

(क) भारतीयसेनायाः पाकिस्तानसेनया सह युद्धम् अभवत्।

(ख) नियन्त्रणरेखायाः समीपे पाकिस्तानस्य विमानंदृष्टमासीत्।

(ग) शान्तिप्रियाःभारतीयाः भवन्ति।

(घ) सैनिकानाम् आत्मबलिदानं व्यर्थं न स्यात्।

5. मञ्जूषातः पदानि चित्वा वाक्यानि पूरयत -

प्रधानमन्त्रिणा व्यर्थम् नास्ति

(क) सैनिकानाम् आत्मबलिदानं ......................... न भवेत्।

(ख) परम् आत्मरक्षणे वयं न कदापि अलसाः इति.................अन्यैश्च उद्घोषितम्।

(ग) शान्तिप्रियाः भारतीयाः इत्यत्र ................. संशयः।

6. संस्कृते अनुवादं कुरुत -

(क) सीमाओं की रक्षा कौन करता है ?

(ख) हिमालय की ऊँची चोटियाँ बर्फ से ढँकी रहती हैं।

(ग) भारतीय शान्तिप्रिय होते हैं।

(घ) कारगिल युद्ध में भारत की जीत हुई।

7. निम्नांकितेषु पदेषु उपसर्गं चित्वा लिखत -

पदम् उपसर्गः

प्रविष्टः प्रविश्क्त

अभिलषति ..........................

प्रतिकूलम् ..........................

प्रयन्नम् ..........................

**शिक्षण-सङ्केतः**

1. छात्रैः देशस्य सीम्नां विषये चर्चां कारयत।

2. पार्श्ववर्तिभिः देशैः सह सम्बन्धस्य विषये प×चवाक्यानि संस्कृते लेखयत।

**स्मरणीयम्**

-वाक्यांशानां कृते एकशब्दः

यं जेतुं न शक्यते सः - अजेयः

यस्मिन् आक्रमणं कर्तुं नशक्यते सः - अनाक्रान्तः

यस्य शत्रुः न जायते सः - अजातशत्रुः

यः स्वल्पं भाषते सः - अल्पभाषी

यस्य अन्तं नास्ति सः - अनन्तः

यत् सदृशं कोऽपि द्वितीयः नास्ति सः - अद्वितीयः

**एतदपि जानीत-**

संस्कृतसाहित्ये विशिष्टयोगदानाय वाचस्पतिपुरस्कारः दीयते।

## सप्तदशः पाठः

# रक्षत बालिकाः पाठयत बालिकाः

शिक्षिका- सुप्रभातं छात्राः!

छात्राः- सुप्रभातं महोदये!

शिक्षिका- अद्य कः दिनाड्.कः ?

बालिकाः- अद्य जनवरीमासस्य चतुर्विंशति दिनाड्.कः ।

शिक्षिका- अयं दिनाड्.कः "राष्ट्रिय बालिका दिवस"

इति रुपेण प्रतिवर्षम् आयोज्यते।

बालिकाः- राष्ट्रिय बालिका दिवसस्य कः अभिप्रायः ?कृपया बोधयतु।

शिक्षिका- श्रृणु बालिकानां संवर्द्धनार्थं भारतसर्वकारस्य महिला एवं बाल विकास मंत्रालयेन 2008 तमे वर्षे प्रतिवर्षं बालिकादिवसस्य आयोजनाय निर्णय कृतम्।

बालिकाः- महोदये! इदं राष्ट्रियबालिकादिवसस्य आयोजनं किमर्थम् ?

*शिक्षिका- भारतदेशे बालिकाभ्यः समानावसरं प्रदातुं एष प्रकल्पः।*

*बालिकाः- महोदये! अस्माकं ग्रामेषु इदानीमपि बालिकाभ्यः शिक्षायाः समानावसरः न मिलति। अधुनापि प्रायेण अभिभावकाः स्व बालिकाः विद्यालयं न प्रेषयन्ति। किम् एतस्याः समस्या समाधानाय सर्वकारस्य काचित् योजना वर्तते ?*

*शिक्षिका- सुष्ठूक्तं युष्माभिः। एतदर्थं सर्वकारः अहर्निशं प्रयतमानः विद्यते। भारत सर्वकारेण एतासां समस्यानां समाधानार्थम् अनेकाः योजनाः स×चालिताः सन्ति।*

*बालिकाः-वयमपि ताः योजनाः ज्ञातुं समुत्सुकाः स्म।*

*शिक्षिका-श्रृणवन्तु बालिकानां शिक्षायै तु समस्ते राष्ट्रे भारत सर्वकारेण कस्तूरबा गांधी बालिका विद्यालयानां स्थापना कृता वर्तते। यत्र षड्वर्षतः चतुर्दशवर्षपर्यन्तमस्य आयुवर्गस्य बालिकाः विद्यालस्य परिसरे पठन्ति निवसन्ति च। अपि च याः बालिकाः केनचित् कारणेन पूर्वमेव अध्ययनात् विरताः तासाम् अपि प्रवेशः अस्मिन् विद्यालये भवति।*

*रचना- महोदये! बालिकानां आर्थिकसहयोगाय काऽपि योजना अस्ति वा ?*

*शिक्षिका- आम् वस्तुतः बालिकाः आर्थिकरूपेण सबला स्युः इति उद्दिश्यं 'सुकन्यासमृद्धि योजना' चलति स्म। अस्यां योजनायां बालिकानां शिक्षा-विवाहादिकृते तासां धनराशिसंचयनप्रोत्साहनस्य व्यवस्था अस्ति।*

*छात्राः-महोदये! एतदतिरिक्तं बालिकाशिशूनाम् कृते कापि योजना प्रचलिता अस्ति ?*

*शिक्षिका-अस्त्येव। बालिकायाः स्वास्थ्यं सुरक्षां च अभिलक्ष्य 'एकाधनलक्ष्मी योजना' अपि प्रचलिता। अस्यां योजनायां यदा कश्चिद् बालिकाशिशःु जायते तदा तस्य परिवारः एकेन निश्चितेन धनराशिना योज्यते।*

*छात्राः-आम् महोदये! भारतसर्वकारेण बालिकानां विकासाय याः योजनाः संचालितास्ताः विज्ञाय वयं प्रमुदिता स्म।*

## शब्दार्थः

*चतुर्विंशति- चैबीस। संवर्द्धनार्थं -संवर्द्धन के लिए। भारतसर्वकारस्य- भारत सरकार की। न प्राप्यते-नहीं मिलता है। न प्रेष्यन्ति-नहीं भेजते हैं। षड्वर्षतः चतुर्दशवर्षपर्यन्तस्य- छह वर्ष से चैदह वर्ष तक की। जायते-उत्पन्न होती है।*

1. *उच्चारणं कुरुत पुस्तिकायां च लिखत -*

*संवर्द्धनार्थम् चतुर्विंशति भारतसर्वकारस्य*

*सुष्ठूक्तम्     अहर्निशं     श्रृणवन्तु*

2. *अधोलिखित पदानां सन्धि-विच्छेदं कुरुत-*

*पत्रालयः*- ......... +.................

*समानावसरः*- .........+...... .......

*पूर्वमेव*- .................+................

*समानाधिकारः*- ..........+...............

3. *मञ्जूषातः पदानि चित्वा वाक्यानि पूरयत-*

*<u>धनलक्ष्मी योजना</u>', <u>सबला स्युः</u>, <u>बालिकाभ्यः</u>*

*(क) अस्माकम् ग्रामेषु इदानीमपि.........................शिक्षायाः समानावसरः न प्राप्यते।*

*(ख) बालिकायाः स्वास्थ्यं सुरक्षां च अभिलक्ष्य 'एका ............अपि प्रचलिता।*

*(ग) बालिकाः आर्थिकरूपेण ................इति उद्दिश्यं 'सुकन्यासमृद्धि योजना' चलति स्म।*

**4. पूर्णवाक्येन उत्तरत-**

(क) धनलक्ष्मी योजनायाः के के लाभाः सन्ति ?

(ख) राष्ट्रिय बालिका दिवसः कदा आयोज्यते ?

(ग) कस्तूरबा गांधी बालिका विद्यालयानां स्थापनाय किं प्रयोजनम् ?

**5. संस्कृत भाषायाम् अनुवादं कुरुत-**

(क) बालिका शिक्षा के संवर्द्धन हेतु अनेक योजनाएँ हैं।

(ख) बेटा और बेटी को समान अधिकार मिलने चाहिए।

(ग) बालिका शिक्षा का सामाजिक विकास में बहुत महत्वपूर्ण स्थान है।

(घ) 24 जनवरी को राष्ट्रीय बालिका दिवस मनाया जाता है।

**6. मेलनं कुरुत-**

यथा- सुकन्या समृद्धि योजना शिशुबालिकाजन्मसंबद्धा

कस्तूरबागांधीबालिकाविद्यालय: जनवरीमासस्य चतुर्विंशति दिनांड.्कः

धनलक्ष्मीयोजना धनसंचय योजना

राष्ट्रिय बालिका दिवसः आवासीय विद्यालयः

**7. एकपदेन उत्तरत-**

अन्तर्राष्ट्रिय बालिका दिवसः-

अन्तर्राष्ट्रिय महिला दिवसः-

## अष्टादशःपाठः

# एत बालकाः

एत बालकाः ! स्वयं चलाम।

काठिन्यं दूरे करवाम। 1।

एत नयाम नभस्तारकम्।

दूरे कुर्मश्चान्धकारकम्। 2।

एत पर्वतानपि परिमाम।

शक्तिसमुदयं नैव जहाम। 3।

एत सागरं प्रति गच्छाम।

जीवनकलशं ननु विभराम। 4।

एतातुलितां शक्तिं लब्ध्वा,

पौरुषेण खलु भाग्यं बद्ध्वा।

एत विदध्म तपो नवीनम्,

पूरयेम वाञ्छाकमनीयम्। 5।

सेवामहै जनांश्च निकामम्।

लोभं विना सुधापाः कामम्। 6।

एत जयेम मनांसि जनानाम्

जीवनमिह सफलं बालानाम्। 7।

एत विकुर्मो भ्रान्तिसमूहम्।

दर्शयेम नवमार्गारोहम्। 8।

एत मङ्गलं बहु वितरेम।

विश्वमनल्पं लघु कलयेम। 9।

## शब्दार्थः

एत = आओ। नयाम = ले आयें। अन्धकारकम् = अंधकार को । परिमाम= नाप लें। जहाम = त्याग करें। विभराम = पूर्ण करें, भरें। अतुलिताम् = अतुलनीय, अपरिमित। लब्ध्वा = प्राप्त कर। बद्ध्वा = बाँधकर। विदध्म = विधान करें। पूरयेम = पूर्ण करें। वाञ्छाकमनीयम् = इच्छित सुन्दर कामना को। सेवामहै = सेवा करें। निकामम् = पर्याप्त, यथेच्छ। सुधापाः = अमृतपान करने वाले। कामम् = कामना के अनुसार। इह = यहाँ। विकुर्मः = दूर करते हैं। दर्शयेम = दिखायें। नवमार्गारोहम् = नये मार्ग पर चलना। अनल्पम् = सम्पूर्ण । कलयेम = बनावें।

## अभ्यासः

1. उच्चारणं कुरुत पुस्तिकायां च लिखत-

विदध्म ,वाञ्छा ,नभस्तारकम्

अन्धकारकम् ,पौरुषेण ,सेवामहै

2. *एकपदेन उत्तरत -*

(*क*) *काठिन्यं किं करवाम* ?

(*ख*) *वयं किं परिमाम* ?

(*ग*) *किं दूरे कुर्मः* ?

(*घ*) *किं विभराम* ?

3. *पूर्णवाक्येन उत्तरत -*

(*क*) *काठिन्यं दूरं कर्तुं वयं किं करवाम* ?

(*ख*) *वयं किं नैव जहाम* ?

(*ग*) *तपः कृत्वा किं पूरयेम* ?

(*घ*) *भ्रान्तिसमूहं दूरं कृत्वा वयं किं दर्शयेम* ?

4. *रेखांकितपदानि आधृत्य प्रश्ननिर्माणं कुरुत -*

(*क*) *जनानां मनांसि जयेम*।

(*ख*) *मङ्गलं बहु वितरेम*।

(*ग*) *वयं नभस्तारकं नयाम* ।

5. *मञ्जूषातः क्रियापदानि चित्वा वाक्यानि पूरयत -*

*जयन्तु गच्छतु नय करवाम*

*अहं काठिन्यं दूरे करवाम*।

(क) त्वं नभस्तारकम् .......................।

(ख) सः सागरं प्रति .........................।

(ग) ते जनानां मनांसि ....................।

6. संस्कृते अनुवादं कुरुत -

(क) कठिनता को हम दूर करें।

(ख) हम सब अन्धकार को दूर करें।

(ग) सागर की ओर चलें।

(घ) हम भ्रान्तियों को दूर करें।

7. धातुः, लकारः, पुरुषं च लिखत -

यथा-करवाम = कृ , लोट् लकार , उत्तम पुरुष।

(क) नयाम

(ग) गच्छाम

(घ) पूरयेत

एतदपि जानीत

-


'यूरोपे संस्कृतस्य सर्वप्रथमप्रचारकः विलियम जोन्स महोदयः अस्ति।

ऊनविंशः पाठः

## अहं संगणकः अस्मि

संगणकः-छात्राः!

छात्राः- (श्रुत्वा) अये! कस्य स्वरः!

संगणकः- भोः बालकाः! अहम् अत्र अस्मि ।

छात्राः - (दृष्टुं निकटे च गत्वा) तव नाम किम् अस्ति ?

संगणकः मम नाम संगणकः। अहं गृहे गृहे निवसामि। किं न जानासि ?

एकः छात्रः- नहि, त्वम् अत्र विद्यालये निवससि। मम गृहे तु न निवससि।

संगणकः- आम्। अधुना तव गृहे न निवसामि। यदा मया सह तव परिचयः भविश्यति, तदा तव गृहे अपि भविश्यामि।

*एकः छात्रः- सत्यं वदसि। परिचयं बिना गृहे प्रवेषः न भवितुं अर्हति। भोः संगणक! तव पूर्णः परिचयः कः?*

*सर्वे छात्राः- तव परिचयः कः ? तव परिचयः कः ? छात्राः कोलाहलं कुर्वन्ति।*

*संगणकः- भो छात्राः। अलं कोलाहलेन श्रृणुत। यूयं ध्यानं दत्वा तूश्णीं च भूत्वा श्रोतुम् इच्छथ। तदा*

*(सर्वे छात्राः तूश्णीं तिश्ठन्ति।)*

*छात्राः- श्रीमन् संगणकमहोदय! वयं ध्यानेन श्रोश्यामः।*

*संगणकः- सूचनानां संग्रहः, तासां व्यवस्था, पुनः क्षिप्रमेव प्रदानम् एव मम कार्यम्। अतः सर्वत्र अहम् अस्मि।अहं- विद्यालयस्य परीक्षाकार्ये अंकपत्रनिर्माणे, प्रमाणपत्र-निर्माणे च योगदानं कर्तुम समर्थः अस्मि। अहम् अन्तर्जालमाध्यमेन (इन्टरनेटमाध्यमेन) सूचनावर्शणं करोमि।*

*छात्राः- संगणक! इण्टरनेटमाध्यमेन किं भवति?*

*संगणकः- अन्तर्जालमाध्यमेन विष्वम् एकनीडं भवति। गृहे एव रेलयानस्य, वायुयानस्य,आरक्षणं, वस्तूनां क्रयविक्रयौ, ईमेलद्वारा संदेष-प्रेशणं, वेबकैमद्वारा सषब्द-सचित्रं सन्देष-प्रेशणं च भवति। भोः बालकाः! किं किं न भवति? क्षणेनैव सूचना आयाति याति च।*

*छात्राः- अहो अद्भुतः! अयम् अन्तर्जालव्यवस्था।*

*( बालकाः संगणकं परिक्रामन्ति गायन्ति च )*

*संगणकस्त्वं संगणकस्त्वम्, नूनं तव सुविकासः।*

*यत्र तत्र सर्वत्र दृष्यते, अहर्निषं तव लासः।*

## शब्दार्थः

संगणकः = कम्प्यूटर। श्रृण्वन्तु = सुनो। भवितुम् = होने के लिए। तूश्णीं भूत्वा = मौन होकर।क्षिप्रम् = तुरन्त। सूचनावर्शणम् = सूचनाओं की वर्शा। नीडम् = घर।निमिश-मात्रेण = क्षणमात्र के द्वारा। इन्द्रजालः = जादू। परिक्रामन्ति = परिक्रमा करते हैं। अहर्निषम् = दिन और रात। लास्यः = क्रीड़ा।

1. उच्चारणं कुरुत पुस्तिकायां च लिखत-

श्रृण्वन्तु श्रुत्वा द्रश्टुं नार्हति श्रोतुम् क्षिप्रमेव श्रोश्यामः

इण्टरनेटमाध्यमेन एकनीडं वेबकैमद्वारा संगणकस्त्वम्

2. एकपदेन उत्तरत-

(क) काः कोलाहलं कुर्वन्ति ?

(ख) परिचयं बिना कुत्र प्रवेशः न भवति ?

(ग) कः सर्वत्र अस्ति?

(घ) केन माध्यमेन विष्वम् एकनीडं भवति?

3. शुद्धम रुपं लिखत-

पठतुम् पठितुम्

(क) खेलीतुम् -------

(ख) खातुम् -------

(ग) हसतुम् -------

**4.दत्तेन शब्देन वाक्यानि पूरयत-**

*कः, किम्, कुत्र, कस्य*

(*क*) *तव नाम*......................................*अस्ति*?

(*ख*) *अये!*..............................................*स्वरः*?

(*ग*) *त्वं*.............................................*निवससि*?

(*घ*) ................................................*को ऽत्र भोः*?

**5- विलोमानां परस्परं मेलनं कुरुत-**

| | |
|---|---|
| *ह्यः* | *मन्दः* |
| *श्वेतः* | *अन्ते* |
| *तीव्रः* | *श्वः* |
| *आदौ* | *श्यामः* |

**6- संस्कृते अनुवादं कुरुत -**

(*क*) *मैं विद्यालय में रहता हूँ।*

(*ख*) *चुप होकर ध्यान से सुनो।*

(*ग*) *प्रमाण-पत्र में योगदान करता है।*

**7-संगणकः इति विषये निबंधं लिखत।**

**शिक्षण-सङ्केतः**

***संगणकस्य प्रयोगः कुत्र-कुत्र भवति, एतस्य उपरि छात्रेण सह विस्ताररुपेण चर्चां कारयत।***

## परिशिष्टम्

## व्याकरणम्

## सन्धिः,

*__पूर्वरूपसन्धि नियम__- 'एङः पदान्तादति' - यदि किसी पद (शब्दरूप या धातुरूप) के अन्त में एङ् (ए अथवा ओ) आये और उसके बाद अ आये तो पूर्व और पर के स्थान में क्रमशः ए अथवा ओ हो जाता है और वहाँ पूर्वरूप-सूचक अवग्रह (ऽ) का चिह्न लग जाता है, जैसे-हरे +अव = हरेऽव, विष्णो + अव = विष्णोऽव, वने+ अत्र = वनेऽत्र, बालो+ अवदत् = बालोऽवदत्, लभे + अहम् = लभेऽहम्।*

*__एङिपररुपम्__-अकारान्त उपसर्ग के बाद एङादि (ए, ओ आदि) वाले धातु बाद में हो तो पररुप एकादेश होता है। जैसे-'प्रेजते-प्र+एजते' यहाँ वृद्धि को बाँधकर 'एङिपररुपम्' सूत्र से प्र का अ, एजते के ए का रुप बनकर प्रेजते बनता है। इसी प्रकार 'उप+ओषति' मिलकर ओषति बनता है।*

*__श्चुत्वसन्धि नियम__- 'स्तोः श्चुना श्चुः' - स् तथा तवर्ग (त, थ, द, ध, न) के स्थान में श् तथा चवर्ग (च, छ, ज झ, ´) हो जाता है, यदि उसका श् या चवर्ग के साथ योग हो, जैसे-बालस् + शेते = बालश्शेते, गजस् + चलति = गजश्चलति, सत् + चित् = सच्चित्, शार्ङ्गिन्+ जयः = शाङ्र्गिञ्जयः । सद्+ जनः = सज्जनः, कस् + चित् = कश्चित्।*

*__जश्त्वसन्धि नियम__- 'झलां जशोऽन्ते' - पदान्त झल् (वर्ग का प्रथम, द्वितीय, तृतीय*

*तथा चतुर्थ अक्षर तथा ऊष्म वर्ण (श, ष, स, ह) के स्थान में जश् (अपने वर्ग का तृतीय अक्षर) हो जाता है, जैसे-वाक् + ईशः = वागीशः, चित् +आनन्दः = चिदानन्दः, षट् + एव = षडेव, उत् + देश्यम् = उद्देश्यम्। सुप् + अन्तः = सुबन्तः। सत् + आचारः = सदाचारः।*

***अनुस्वार*** *- **'मोऽनुस्वारः'** - पदान्त 'म्' को अनुस्वार हो जाता है, हल् (व्यञ्जन) वर्ण के परे रहने पर, जैसे- हरिम् + वन्दे = हरिं वन्दे, कार्यम् + कुरु = कार्यं कुरु, सत्यम् + वद = सत्यं वद।*

**शब्दरूपाणि**

**संज्ञा-शब्दाः - पुंल्लिङ्गम्**

**आत्मन्**

| विभक्तिः | एकवचनम् | द्विवचनम् | बहुवचनम् |
| --- | --- | --- | --- |
| प्रथमा | आत्मा | आत्मानौ | आत्मानः |
| द्वितीया | आत्मानम् | आत्मानौ | आत्मनः |
| तृतीया | आत्मना | आत्मभ्याम् | आत्मभिः |
| चतुर्थी | आत्मने | आत्मभ्याम् | आत्मभ्यः |
| पञ्चमी | आत्मनः | आत्मभ्याम् | आत्मभ्यः |
| षष्ठी | आत्मनः | आत्मनोः | आत्मनाम् |
| सप्तमी | आत्मनि | आत्मनोः | आत्मसु |
| सम्बोधनम् | हे आत्मन्! | हे आत्मानौ! | हे आत्मानः! |

इसी प्रकार अश्मन् (पत्थर), अध्वन् (मार्ग), ब्रह्मन् (ब्रह्मा) इत्यादि के रूप चलते हैं।

## राजन् (राजा)

| विभक्तिः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | राजा | राजानौ | राजानः |
| द्वितीया | राजानम् | राजानौ | राज्ञः |
| तृतीया | राज्ञा | राजभ्याम् | राजभिः |
| चतुर्थी | राज्ञे | राजभ्याम् | राजभ्यः |
| पञ्चमी | राज्ञः | राजभ्याम् | राजभ्यः |
| षष्ठी | राज्ञः | राज्ञोः | राज्ञाम् |
| सप्तमी | राज्ञि/राजनि | राज्ञोः | राजसु |
| सम्बोधनम् | हे राजन्! | हे राजानौ! | हे राजानः! |

## ***विद्वस् (विद्वान)***

***विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्***

***प्रथमा विद्वान् विद्वांसौ विद्वांसः***

***द्वितीया विद्वांसम् विद्वांसौ विदुषः***

***तृतीया विदुषा विद्वद्भ्याम् विद्वद्भिः***

***चतुर्थी विदुषे विद्वद्भ्याम् विद्वद्भ्यः***

***पञ्चमी विदुषः विद्वद्भ्याम् विद्वद्भ्यः***

***षष्ठी विदुषः विदुषोः विदुषाम्***

***सप्तमी विदुषि विदुषोः विद्वत्सु***

***सम्बोधनम् हे विद्वन्! हे विद्वांसौ! हे विद्वांसः!***

***इसका स्त्रीलिङ्ग विदुषी होता है, जिसका रूप नदी के समान चलता है।***

## स्त्रीलिङ्गम्

### मातृ (माता)

विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्

प्रथमा माता मातरौ मातरः

द्वितीया मातरम् मातरौ मात§ः

तृतीया मात्रा मातृभ्याम् मातृभिः

चतुर्थी मात्रे मातृभ्याम् मातृभ्यः

पञ्चमी मातुः मातृभ्याम् मातृभ्यः

षष्ठी मातुः मात्रोः मातृणाम्

सप्तमी मातरि मात्रोः मातृषु

सम्बोधनम् हे मातः! हे मातरौ! हे मातरः!

इसी प्रकार दुहितृ (पुत्री), यातृ (देवरानी) आदि का रूप चलता है।

## ***वाच् (वाणी)***

***विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्***

***प्रथमा वाक्/वाग् वाचौ वाचः***

***द्वितीया वाचम् वाचौ वाचः***

***तृतीया वाचा वाग्भ्याम् वाग्भिः***

***चतुर्थी वाचे वाग्भ्याम्◌् वाग्भ्यः***

***पञ्चमी वाचः वाग्भ्याम् वाग्भ्यः***

***षष्ठी वाचः वाचोः वाचाम्***

***सप्तमी वाचि वाचोः वाक्षु***

***सम्बोधनम् हे वाक्/वाग्! हे वाचौ! हे वाचः!***

***इसी प्रकार त्वच्, शुच्, रुच्, ऋच्, आदि शब्दों के रूप चलते हैं।***

## सरित् (नदी)

*विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्*

*प्रथमा सरित् सरितौ सरितः*

*द्वितीया सरितम् सरितौ सरितः*

*तृतीया सरिता सरिद्भ्याम् सरिद्भिः*

*चतुर्थी सरिते सरिद्भ्याम् सरिद्भ्यः*

*पञ्चमी सरितः सरिद्भ्याम् सरिद्भ्यः*

*षष्ठी सरितः सरितोः सरिताम्*

*सप्तमी सरिति सरितोः सरित्सु*

*सम्बोधनम् हे सरित्! हे सरितौ! हे सरितः!*

*इसी प्रकार विद्युत् योषित् (स्त्री) आदि शब्दों के रूप चलते हैं।*

## *दिक् (दिशा)*

*विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्*

*प्रथमा दिक्/दिग् दिशौ दिशः*

*द्वितीया दिशम् दिशौ दिशः*

*तृतीया दिशा दिग्भ्याम् दिग्भिः*

*चतुर्थी दिशे दिग्भ्याम् दिग्भ्यः*

*पञ्चमी दिशः दिग्भ्याम् दिग्भ्यः*

*षष्ठी दिशः दिशोः दिशाम्*

*सप्तमी दिशि दिशोः दिक्षु*

*सम्बोधनम् हे दिक्/दिग्! हे दिशौ! हे दिशः!*

## नपुंसकलिङ्गम्

**जगत् (संसार),**

विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्

प्रथमा जगत्/जगद् जगती जगन्ति

द्वितीया जगत्/जगद् जगती जगन्ति

तृतीया जगता जगद्भ्याम् जगद्भिः

चतुर्थी जगते जगद्भ्याम् जगद्भ्यः

पञ्चमी  जगतः जगद्भ्याम् जगद्भ्यः

षष्ठी जगतः जगतोः जगताम्

सप्तमी जगति जगतोः जगत्सु

सम्बोधनम् हे जगत्! हे जगती! हे जगन्ति!

इसी प्रकार तकारान्त नपुंसकलिङ्ग शब्दों के रूप चलते हैं।

## नामन् (नाम)

विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्

प्रथमा नाम नाम्नी/नामनी नामानि

द्वितीया नाम नाम्नी/नामनी नामानि

तृतीया नाम्ना नामभ्याम् नामभिः

चतुर्थी नाम्ने नामभ्याम् नामभ्यः

पञ्चमी नाम्नः नामभ्याम् नामभ्यः

षष्ठी नाम्नः नाम्नोः नाम्नाम्

सप्तमी नाम्नि/नामनि नाम्नोः नामसु

सम्बोधनम् हे नाम/नामन्! हे नाम्नी/नामनी! हे नामानि!

**पयस् (पानी, दूध)**

*विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्*

*प्रथमा पयः पयसी पयांसि*

*द्वितीया पयः पयसी पयांसि*

*तृतीया पयसा पयोभ्याम् पयोभिः*

*चतुर्थी पयसे पयोभ्याम् पयोभ्यः*

*पञ्चमी पयसः पयोभ्याम् पयोभ्यः*

*षष्ठी पयसः पयसोः पयसाम्*

*सप्तमी पयसि पयसोः पयस्सु/पयःसु*

*सम्बोधनम् हे पयः! हे पयसी! हे पयांसि!*

*इसी प्रकार उरस्, नभस्, अयस्, तमस्, वचस्, यशस्, तपस्, शिरस्, रजस्, आदि सकारान्त नपुंसकलिङ्ग शब्दों के रूप चलते हैं।*

## मनस् (मन)

विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्

प्रथमा मनः मनसी मनांसि

द्वितीया मनः मनसी मनांसि

तृतीया मनसा मनोभ्याम् मनोभिः

चतुर्थी मनसे मनोभ्याम् मनोभ्यः

पञ्चमी मनसः मनोभ्याम् मनोभ्यः

षष्ठी मनसः मनसोः मनसाम्

सप्तमी मनसि मनसोः मनस्सु

सम्बोधनम् हे मनः! हे मनसी! हे मनांसि!

**भवत् (आप)**

**पुंल्लिङ्गम्**

**विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्**

**प्रथमा भवान् भवन्तौ भवन्तः**

**द्वितीया भवन्तम् भवन्तौ भवतः**

**तृतीया भवता भवद्भ्याम् भवद्भिः**

**चतुर्थी भवते भवद्भ्याम् भवद्भ्यः**

**पञ्चमी भवतः भवद्भ्याम् भवद्भ्यः**

**षष्ठी भवतः भवतोः भवताम्**

**सप्तमी भवति भवतोः भवत्सु**

**भवत**

**स्त्रीलिङ्गम्**

**विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्**

**प्रथमा भवती भवत्यौ भवत्यः**

**द्वितीया भवतीम् भवत्यौ भवतीः**

**तृतीया भवत्या भवतीभ्याम् भवतीभिः**

**चतुर्थी भवत्यै भवतीभ्याम् भवतीभ्यः**

**पञ्चमी भवत्याः भवतीभ्याम् भवतीभ्यः**

**षष्ठी भवत्याः भवत्योः भवतीनाम्**

**सप्तमी भवत्याम् भवत्योः भवतीषु**

**सर्वनामशब्दाः**

**अदस् (यह ) पुंल्लिङ्गम्**

विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्

प्रथमा असौ अमू अमी

द्वितीया अमुम् अमू अमून्

तृतीया अमुना अमूभ्याम् अमीभिः

चतुर्थी अमुष्मै अमूभ्याम् अमीभ्यः

पञ्चमी अमुष्मात् अमूभ्याम् अमीभ्यः

षष्ठी अमुष्य अमुयोः अमीषाम्

सप्तमी अमुष्मिन् अमुयोः अमीषु

## ***अदस्***

### ***स्त्रीलिङ्गम्***

***विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्***

***प्रथमा असौ अमू अमूः***

***द्वितीया अमुम् अमू अमूः***

***तृतीया अमुया अमूभ्याम् अमूभिः***

***चतुर्थी अमुष्यै अमूभ्याम् अमूभ्यः***

***पञ्चमी अमुष्याः अमूभ्याम् अमूभ्यः***

***षष्ठी अमुष्याः अमुयोः अमूषाम्***

***सप्तमी अमुष्याम् अमुयोः अमूषु***

## *अदस्*

### *नपंसुकलिङ्गम्*

*विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्*

*प्रथमा अदः अमू अमूनि*

*द्वितीया अदः अमू अमूनि*

*तृतीया अमुना अमूभ्याम् अमीभिः*

*चतुर्थी अमुष्मै अमूभ्याम् अमीभ्यः*

*पञ्चमी अमुष्मात् अमूभ्याम् अमीभ्यः*

*षष्ठी अमुष्य अमुयोः अमीषाम्*

*सप्तमी अमुष्मिन् अमुयोः अमीषु*

## एतत् (यह)

### पुंल्लिङ्गम्

प्रथमा एषः एतौ एते

द्वितीया एतम्/एनम् एतौ/एनौ एतान्/एनान्

तृतीया एतेन/एनेन एताभ्याम् एतैः

चतुर्थी एतस्मै एताभ्याम् एतेभ्यः

पञ्चमी एतस्मात् एताभ्याम् एतेभ्यः

षष्ठी एतस्य एतयोः/एनयोः एतेषाम्

सप्तमी एतस्मिन् एतयोः/एनयोः एतेषु

**एतत् (यह)**

**स्त्रीलिङ्गम्**

**विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्**

**प्रथमा एषा एते एताः**

**द्वितीया एताम् एते एताः**

**तृतीया एतया एताभ्याम् एताभिः**

**चतुर्थी एतस्यै एताभ्याम् एताभ्यः**

**पञ्चमी एतस्याः एताभ्याम् एताभ्यः**

**षष्ठी एतस्याः एतयोः एतासाम्**

**सप्तमी एतस्याम् एतयोः एतासु**

## ***एतत् (यह)***

### ***नपुंसकलिङ्गम्***

***विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्***

***प्रथमा एतत् एते एतानि***

***द्वितीया एतत्/एनत् एते एतानि***

***<u>शेष विभक्तियों में पुंल्लिङ्ग के समान रूप चलते हैं।</u>***

## *संख्याएँ*

01 *से* 04 *तक की संख्याओं के रूप कक्षा* 7 *में बताये जा चुके हैं। यहाँ* 05 *से* 10 *तक की संख्याओं के तीनों लिङ्गों में रूप दिये जा रहे हैं-*

***पञ्चन्, षष्, सप्तन्, अष्टन्, नवन्, दशन्***

(*पुंल्लिङ्ग*, *स्त्रीलिङ्ग तथा नपुंसकलिङ्ग में*)

***विभक्तिः***

**5,6,7**

***प्रथमा= पञ्च- षट्/षड् -सप्त***

***द्वितीया= पञ्च- षट्/षड् -सप्त***

*तृतीया =पञ्चभिः -षड्भिः- सप्तभिः*

*चतुर्थी =पञ्चभ्यः -षड्भ्यः- सप्तभ्यः*

*पञ्चमी =पञ्चभ्यः -षड्भ्यः- सप्तभ्यः*

*षष्ठी =पञ्चॉनाम् -षण्णाम् -सप्तानाम्*

***सप्तमी= पञ्चसु -षट्सु- सप्तसु***

**8,9,10**

*प्रथमा =अष्टौ /अष्ट- नव- दश*

*द्वितीया =अष्टौ /अष्ट- नव- दश*

तृतीया =अष्टाभिः–नवभिः- दशभिः

चतुर्थी = अष्टाभ्यः -नवभ्यः -दशभ्यः

पञ्चमी=अष्टाभ्यः /अष्टिभिः -नवभ्यः -दशभ्यः

षष्ठी =अष्टानाम -नवानाम् -दशानाम्

सप्तमी =अष्टासु/अष्टसु -नवसु- दशसु

सम्बोधन= हे अष्टौ/अष्ट - हे नव!- हे दश!

## एक से पचास तक की संख्याएँ

एक=एकम्

दो= द्वे

तीन =त्रीणि

चार =चत्वारि

पाँच= पञ्च

छह =षट्

सात=सप्त

आठ= अष्ट

नौ = नव छब्बीस

दस == दश

ग्यारह= एकादश

बारह= द्वादश

तेरह= त्रयोदश

चौदह= चतुर्दश

पन्द्रह=पञ्चदश

सोलह= षोडश

*सत्रह= सप्तदश*

*अट्ठारह= अष्टादश*

*उन्नीस =एकोनविंशतिः*

*बीस= विंशतिः*

*इक्कीस= एकविंशतिः*

*बाईस= द्वाविंशतिः*

*तेईस= त्रयोविंशतिः*

*चौबीस= चतुर्विंशतिः*

*पच्चीस =पञ्चविंशतिः*

*छब्बीस =षड्विंशतिः*

*सत्ताईस = सप्तविंशतिः*

*अट्ठाईस= अष्टाविंशतिः*

*उन्तीस =नवविंशतिः*

*तीस= त्रिंशत्*

*इकतीस= एकत्रिंशत्*

*बत्तीस= द्वात्रिंशत्*

*तैंतीस= त्रयस्त्रिंशत्*

चौंतीस = चतुस्त्रिंशत्

पैंतीस= पञ्चत्रिंशत्

छत्तीस= षट्त्रिंशत्

सैंतीस= सप्तत्रिंशत्

अड़तीस= अष्टात्रिंशत्

उन्तालीस=नवत्रिंशत्।ऊनचत्वारिंशत्

चालीस = चत्वारिंशत्

एकतालीस= एकचत्वारिंशत्

बयालीस = द्वाचत्वारिंशत्।द्विचत्वारिंशत्

तैंतालीस= त्रयश्चत्वारिंशंत्।त्रिचत्वारिंशंत्

चवालीस = चतुश्चत्वारिंशत्

पैंतालीस= पञ्चचत्वारिंशत्

छियालीस =षट्चत्वारिंशत्

सैंतालीस =सप्तचत्वारिंशत्

अड़तालीस= अष्टाचत्वारिंशत्

उनचास= नवचत्वारिंशत।ऊनपञ्चाशत्

पचास= पञ्चाशत्

**विशेषण**

**विशाल**

**पुंल्लिङ्गम्**

**प्रथमा विशालः विशालौ विशालाः**

**द्वितीया विशालम् विशालौ विशालान्**

**तृतीया विशालेन विशालाभ्याम् विशालैः**

**चतुर्थी विशालाय विशालाभ्याम् विशालेभ्यः**

**पञ्चमी विशालात् विशालाभ्याम् विशालेभ्यः**

**षष्ठी विशालस्य विशालयोः विशालानाम्**

**सप्तमी विशाले विशालयोः विशालेषु**

**सम्बोधनम् हे विशाल! हे विशालौ! हे विशालाः!**

**विशाल**

**स्त्रीलिङ्गम्**

**विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्**

**प्रथमा विशाला विशाले विशालाः**

**द्वितीया विशालाम् विशाले विशालाः**

**तृतीया विशालया विशालाभ्याम् विशालाभिः**

**चतुर्थी विशालायै विशालाभ्याम् विशालाभ्यः**

**पञ्चमी विशालायाः विशालाभ्याम् विशालाभ्यः**

**षष्ठी विशालायाः विशालयोः विशालानाम्**

**सप्तमी विशालायाम् विशालयोः विशालासु**

**सम्बोधनम् हे विशाले! हे विशाले! हे विशालाः!**

**विशाल**

**नपुन्सकलिङ्गम्**

**विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्**

**प्रथमा विशालम् विशाले विशालानि**

**द्वितीया विशालम् विशाले विशालानि**

**तृतीया विशालेन विशालाभ्याम् विशालैः**

**चतुर्थी विशालाय विशालाभ्याम् विशालेभ्यः**

**पञ्चमी विशालात् विशालाभ्याम् विशालेभ्यः**

**षष्ठी विशालस्य विशालयोः विशालानाम्**

**सप्तमी विशाले विशालयोः विशालेषु**

**सम्बोधनम् हे विशाल! हे विशालौ! हे विशालाः!**

**दीर्घ**

**पुंल्लिङ्गम्**

**विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्**

**प्रथमा दीर्घः दीर्घौ दीर्घाः**

**द्वितीया दीर्घम् दीर्घौ दीर्घान्**

**तृतीया दीर्घेण दीर्घाभ्याम् दीर्घैः**

**चतुर्थी दीर्घाय दीर्घाभ्याम् दीर्घेभ्यः**

**पञ्चमी दीर्घात् दीर्घाभ्याम् दीर्घेभ्यः**

**षष्ठी दीर्घस्य दीर्घयोः दीर्घाणाम्**

**सप्तमी दीर्घे दीर्घयोः दीर्घेषु**

**सम्बोधनम् हे दीर्घ! हे दीर्घौ! हे दीर्घाः!**

**दीर्घ**

## स्त्रीलिङ्गम्

प्रथमा दीर्घा दीर्घे दीर्घाः

द्वितीया दीर्घाम् दीर्घे दीर्घाः

तृतीया दीर्घया दीर्घाभ्याम् दीर्घाभिः

चतुर्थी दीर्घायै दीर्घाभ्याम् दीर्घाभ्यः

पञ्चमी दीर्घायाः दीर्घाभ्याम् दीर्घाभ्यः

षष्ठी दीर्घायाः दीर्घयोः दीर्घाणाम्

सप्तमी दीर्घायाम् दीर्घयोः दीर्घासु

सम्बोधनम् हे दीर्घे! हे दीर्घे! हे दीर्घाः!

दीर्घ

## नपुंसकलिङ्गम्

प्रथमा दीर्घम् दीर्घे दीर्घाणि

द्वितीया दीर्घम् दीर्घे दीर्घाणि

तृतीया दीर्घेण दीर्घाभ्याम् दीर्घैः

चतुर्थी दीर्घाय दीर्घाभ्याम् दीर्घेभ्यः

पञ्चमी दीर्घात् दीर्घाभ्याम् दीर्घेभ्यः

षष्ठी दीर्घस्य दीर्घयोः दीर्घाणाम्

सप्तमी दीर्घे दीर्घयोः दीर्घेषु

सम्बोधनम् हे दीर्घ! हे दीर्घौ! हे दीर्घाः!

# शोभन

## पुंल्लिङ्गम्

प्रथमा शोभनः शोभनौ शोभनाः

द्वितीया शोभनम् शोभनौ शोभनान्

तृतीया शोभनेन शोभनाभ्याम् शोभनैः

चतुर्थी शोभनाय शोभनाभ्याम् शोभनेभ्यः

पञ्चमी शोभनात् शोभनाभ्याम् शोभनेभ्यः

षष्ठी शोभनस्य शोभनयोः शोभनानाम्

सप्तमी शोभने शोभनयोः शोभनेषु

सम्बोधन हे शोभन! हे शोभनौ! हे शोभनाः!

**शोभन**

**स्त्रीलिङ्गम्**

**प्रथमा शोभना शोभने शोभनाः**

**द्वितीया शोभनाम् शोभने शोभनाः**

**तृतीया शोभनया शोभनाभ्याम् शोभनाभिः**

**चतुर्थी शोभनायै शोभनाभ्याम्**

**पञ्चमी शोभनायाः शोभनाभ्याम् शोभनाभ्यः**

**षष्ठी शोभनायाः शोभनयोः शोभनानाम्**

**सप्तमी शोभनायाम् शोभनयोः शोभनासु**

**सम्बोधनम् हे शोभने! हे शोभने! हे शोभनाः!**

**शोभन**

नपुंसकलिङ्गम्

प्रथमा शोभनम् शोभने शोभनानि

द्वितीया शोभनम् शोभने शोभनानि

तृतीया शोभनेन शोभनाभ्याम् शोभनैः

चतुर्थी शोभनाय शोभनाभ्याम् शोभनेभ्यः

पञ्चमी शोभनात् शोभनाभ्याम् शोभनेभ्यः

षष्ठी शोभनस्य शोभनयोः शोभनानाम्

सप्तमी शोभने शोभनयोः शोभनेषु

सम्बोधनम् हे शोभन! हे शोभनौ! हे शोभनाः!

## लघु (छोटा)

### पुंल्लिङ्गम्

विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्

प्रथमा लघुः लघू लघवः

द्वितीया लघुम् लघू लघून्

तृतीया लघुना लघुभ्याम् लघुभिः

चतुर्थी लघवे लघुभ्याम् लघुभ्यः

पञ्चमी लघोः लघुभ्याम् लघुभ्यः

षष्ठी लघोः लघ्वोः लघूनाम्

सप्तमी लघौ लघ्वोः लघुषु

सम्बोधनम् हे लघो! हे लघू! हे लघवः!

***लघु***

***स्त्रीलिङ्गम्***

***प्रथमा लघुः/लघ्वी- लघू/लघ्व्यौ -लघवः/लघ्व्यः***

***द्वितीया लघुम्/लघ्वीम् -लधू/लघ्व्यौ -लघूः/ लघ्वीः***

***तृतीया लघ्वा/लघ्व्या- लघुभ्याम्/लघ्वीभ्याम्- लधुभिः/लघ्वीभिः***

***चतुर्थी लघ्वौ/लघवे/लघ्व्यै -लघुभ्याम्/लघ्वीभ्याम् -लघुभ्यः/लघ्वीभ्यः***

***पञ्चमी लघ्वाः/लघोः/लघ्व्यै -लघुभ्याम्/लघ्वीभ्याम् -लघुभ्यः/लघ्वीभ्यः***

***षष्ठी लघ्वाः/लघोः/लघ्व्यः -लघ्वोः/लघ्व्योः- लघूनाम्/लघ्वीनाम्***

***सप्तमी लघ्वाम्/लघौ/लघ्व्याम्- लघ्वोः/लघ्व्योः- लघुषु/लघ्वीषु***

***सम्बोधनम् हे लघो/हे लघ्वि!- हे लघू/हे लघ्व्यौ!- हे लघवः/लघ्व्यः!***

**लघु**

**नपुंसकलिङ्गम्**

**प्रथमा लघु लघुनी लघूनि**

**द्वितीया लघु लघुनी लघूनि**

**तृतीया लघुना लघुभ्याम् लघुभिः**

**चतुर्थी लघुने लघुभ्याम् लघुभ्यः**

**पञ्चमी लघुनः लघुभ्याम् लघुभ्यः**

**षष्ठी लघुनः लघुनोः लघूनाम्**

**सप्तमी लघुनि लघुनोः लघुषु**

**सम्बोधनम् हे लघो/लघु! हे लघुनी! हे लघूनि!**

## कारक

कारकों का सामान्य परिचय उनके चिह्नों के साथ पिछली कक्षा में दिया जा चुका है। कुछ विशेष नियम नीचे दिये जा रहे हैं-

### तृतीया

सहयुक्तेऽप्रधाने - सहार्थक शब्दों (सह, साकम् सार्धम् और समम्) के योग में अप्रधान कर्ता में तृतीया विभक्ति होती है, जैसे- शिष्यः गुरुणा सह विद्यालयं गच्छति। रामः सीतया साकं वनम् अगच्छत्। हनुमान् वानरैः साकं सीताम् अन्वैषयत्।

येनाङ्गविकारः - जिस अङ्ग से अङ्गी में विकार लक्षित होता है, उस अङ्गवाचक शब्द में तृतीया विभक्ति होती है, यथा- देवदत्तः नेत्रेण काणः अस्ति। मोहनः कर्णेन बधिरः अस्ति। रामनाथः शिरसा खल्वाटः अस्ति। शकुनिः पादेन ख×जः अस्ति।

### चतुर्थी

रुच्यर्थानां प्रीयमाणः - रुच् तथा रुच् के अर्थ वाली धातुओं के योग में प्रसन्न होने वाले की सम्प्रदान संज्ञा होती है। अतः उसमे चतुर्थी विभक्ति होती है, जैसे-शिशवे क्रीडनकं रोचते। मह्यं मोदकं रोचते। छात्राय अध्ययनं रोचते।

### पञ्चमी

भीत्रार्थानां भयहेतुः - भयार्थक तथा रक्षार्थक धातुओं के साथ भय के कारण में पञ्चमी विभक्ति होती है, जैसे - बालकः सर्पाद् बिभेति। असज्जनात् कस्य भयं न जायते। सज्जनः दुष्टाद् बिभेति। त्रायते महतो भयात्।

## ***समास***

***समास शब्द का अर्थ है- संक्षेप। जब दो या दो से अधिक पदों को मिलाकर एक पद बनाया जाता है, तो वह समास कहलाता है। दो पदों के बीच समास में प्रथम पद को पूर्वपद एवं द्वितीय पद को उत्तर पद कहते हैं। जब समास को तोड़कर पूर्व स्थिति में ला देते हैं, तो उसे विग्रह कहते हैं। समास छह प्रकार से होते हैं।***

1. ***अव्ययीभाव*** 2.***तत्पुरुष*** 3.***कर्मधारय*** 4.***द्विगु*** 5. ***बहुब्रीहि*** 6.***द्वन्द्व***

***तत्पुरुष*** - ***तत्पुरुष समास में उत्तर पद के अर्थ की प्रधानता होती है, जैसे- कृष्णं श्रितः = कृष्णश्रितः, हरिणा त्रातः = हरित्रातः, लोकाय हितम् = लोकहितम्, घटाय मृत्तिका = घटमृत्तिका, चोराद् भयम् = चोरभयम्, राज्ञः पुरुषः = राजपुरुषः, सभायां पण्डितः = सभापण्डितः, कूपे पतितः = कूपपतितः।***

***कर्मधारय*** - ***जब एक पद विशेषण होता है तो वह कर्मधारय समास कहलाता है, जैसे -***

***नीलमुत्पलम्=नीलोत्पलम्। घन इव श्यामः=घनश्यामः। मुखं कमलमिव=मुखकमलम्।***

***द्वन्द्व*** - ***जहाँ दो पदों को जोड़ने वाले च (और) शब्द को हटाकर एक पद बनाया जाता है, वहाँ द्वन्द्व समास होता है। यह दो प्रकार का होता है-***

***इतरेतरद्वन्द्व*** - ***इसमें दोनों पदों की प्रधानता होती है, जैसे रामश्च लक्ष्मणश्च=रामलक्ष्मणौ।***

***हरिश्च हरश्च=हरिहरौ।***

***समाहारद्वन्द्व*** - ***जिस द्वन्द समास में दोनों पदों के समूह की प्रधानता होती है, वह समाहार-द्वन्द्व कहलाता है, जैसे- पाणी च पादौ च एतेषां समाहारः=पाणिपादम्, अहिश्च नकुलश्च= अहिनकुलम्।***

# उपसर्ग

निर् - निर्+असनम् = निरसनम्, निर् + देशः=निर्देशः, निर् + गतम् = निर्गतम्, निर् + ईक्षणम्= निरीक्षणम्, निर्+ नयः=निर्णयः।

उप - उप+नयनम् = उपनयनम् (यज्ञोपवीतसंस्कार), उप+ चारः=उपचारः, उप + वेशनम्=उपवेशनम्, उप+स्थितम्=उपस्थितम्, उप+वासः=उपवासः, उप +ईक्षा=उपेक्षा। अभि - अभि+नयः=अभिनयः, अभि+भवम्=अभिभवम्, अभि +सारम्=अभिसारम्, अभि+मन्त्रणा=अभिमन्त्रणा, अभि+धानम्=अभिधानम्, अभि +अर्थना=अभ्यर्थना।अति - अति+क्रमणम्=अतिक्रमणम्, अति+देशः=अतिदेशः, अति +चरः=अतिचरः,अति+शयम्=अतिशयम्।

परि- परि+नयः=परिणयः, परि+धानम्=परिधानम्, परि+चरः=परिचरः, परि +वादः=परिवादः,परि+वर्तनम्=

परिवर्तनम्, परि+हारः=परिहारः।

दुर् - दुर्व्य+वहारः=दुर्व्यवहारः, दुर्+आचारः=दुराचारः, दुर्ग=मः=दुर्गमः।

दुस् - दुस्सा+हसः=दुस्साहसः, दुस्च+रित्रः=दुश्चरित्रः।

## ***प्रत्यय***

***शतृ (अत् ) और शानच् (आन) - क्रिया में वर्तमानकालिक सातत्य (निरन्तरता) द्योतित करने के लिए दो प्रत्यय लगाये जाते हैं-शतृ (अत्) एवं शानच् (आन)। शतृ-प्रत्यय परस्मैपदी धातुओं से तथा शानच् प्रत्यय आत्मनेपदी धातुओं से लगाया जाता है। प्रत्यय लगने के बाद जो पद बनते हैं, उनका रूप विशेष्य के अनुसार तीनो लिङ्गों में चलता है, जैसे-***

***धातु पुंल्लिङ्ग स्त्रीलिंग  नपुंसकलिङ्ग***

***भू भवन् भवन्ती भवत्***

***अस् सन् सती सत्***

***श्रु श्रृण्वन् श्रृण्वती श्रृण्वत्***

***दृश् पश्यन् पश्यन्ती पश्यत्***

***नी नयन् नयन्ती नयत्***

***क्री क्रीणन् क्रीणती क्रीणत्***

***कथ् कथयन् कथयन्ती कथयत्***

***गम् गच्छन् गच्छन्ती गच्छत्***

***तुमुन् (तुम्) - जिस क्रिया के लिए कोई क्रिया की जाती है, उस धातु में तुमुन् (तुम्) प्रत्यय लगाते हैं। प्रधान-क्रिया तथा तुमुन्-प्रत्ययान्त क्रिया का कर्ता समान (एक ही) होना चाहिए, जैसे-छात्रः पठितुं विद्यालयं गच्छति। सः स्नातुं नदीं गच्छति। अहं भोक्तुं गृहं गच्छामि। वानरः फलं ग्रहीतुं प्रयतते। छात्रः काशीं गन्तुम् इच्छति। सः कथां श्रोतुं मन्दिरं याति।***

*क्त्वा (त्वा) और ल्यप् (य) - समानकर्ता वाली दो क्रियाओं मंे पहले होने वाली क्रिया पूर्णकालिक क्रिया कहलाती है। लेकर, जाकर, खाकर आदि अर्थ बताने के लिए धातु में  क्त्वा (त्वा) प्रत्यय लगता है, जैसे-मोहनः भुक्त्वा विद्यालयं गच्छति। यहाँ जाने तथा खाने का काम एक ही कर्ता मोहन करता है। इन दोनों में खाने की क्रिया पहले होती है, अतः भुज् + क्त्वा (त्वा)= भुक्त्वा रूप बना। इसी प्रकार-पठित्वा, गत्वा, नीत्वा, आदि रूप बनते हैं।*

*इसी अर्थ में यदि धातु के पूर्व कोई उपसर्ग लगा हो या क्त्वा प्रत्ययान्त शब्द समास में प्रयुक्त हो रहे हों तो क्त्वा के स्थान पर ल्यप् (य) प्रत्यय लगता है, जैसे-आ+नी +ल्यप्(य)=आनीय। प्र+दा+ल्यप् (य)= प्रदाय आदि।*

## ***अव्यय तथा इनका वाक्य में प्रयोग***

***<u>अव्यय अर्थ वाक्य प्रयोग</u>***

***सम्प्रति (इस समय) - सम्प्रति शिक्षायाः दशा शोचनीया जाताऽस्ति। सम्प्रति कलहो न कार्यः।***

***साम्प्रतम् (अब/उचित) - साम्प्रतं सायंवेला जाता। सम्प्रति क्रीडनं न साम्प्रतम्।***

***अहो (सम्बोधन) - अहो ! मधुरं गीतमासां बालिकानाम्। अहो ! महत्कष्टं समापतितम्।***

***हा (शोक, विषाद, - हा ! मृतोऽसौ मृगः। हा ! कथं स मे भ्राता। हा ! अकाले***

***आश्चर्य, विस्मय) जलदागमः।***

***प्रति (ओर, तरफ) - सः विद्यालयं प्रति गच्छति। दीनं प्रति दया कार्या।***

***दिवा (दिन में) - दिवा न शयनीयम्।***

***शीघ्रम् (जल्द) - शीघ्रमागच्छ औषधमानेतव्यमस्ति।***

***सहसा (एकदम, अचानक) - सहसा विदधीत न क्रियाम्।***

***बहुधा (प्रायः अनेक प्रकार से) - बहुधा त्रुटयो भवन्ति। एकं सद्विप्राः बहुधा वदन्ति।***

***अधुना (इस समय) - अधुना ते पुस्तकं पठन्ति।***

***सर्वदा (हमेशा) - सः सर्वदा सत्यं वदति।***

***यथा (जैसा) - यथा भवान् इच्छति।***

## वाच्य-परिवर्तन

संस्कृत में वाक्य की क्रियाएँ तीन वाच्यों में होतीं हैं - कर्तृवाच्य, कर्मवाच्य और भाववाच्य। सकर्मक धातुओं की क्रिया दो वाच्यों में - कर्तृवाच्य एवं कर्मवाच्य मे होती हैं।

1. कर्तृवाच्य -इसमें कर्ता में प्रथमा तथा कर्म में द्वितीया-विभक्ति होती है, जैसे - देवदत्तः ग्रामं गच्छति। रमा ग्रन्थं पठति।

2. कर्मवाच्य - इसमें कर्म मंे प्रथमा तथा कर्ता मंे तृतीया-विभक्ति होती है। इन दोनों वाच्यांे में क्रिया प्रथमान्त पद के अनुसार होती है, जैसे - देवदत्तेन ग्रामः गम्यते। रमया ग्रन्थाः पठ्यन्ते।

3. भाववाच्य - इसमें कर्ता में तृतीया विभक्ति होती है तथा क्रिया आत्मनेपदी प्रथम पुरुष एक वचन की ही होती है,

जैसे - देवदत्तेन हस्यते। शिशुना रुद्यते।

कर्तृवाच्य से कर्मवाच्य में बदलते समय प्रथमान्त कर्ता में तृतीया-विभक्ति लगाना चाहिए तथा द्वितीयान्त कर्म में प्रथमा-विभक्ति होती है, जैसे

देवदत्तः ग्रामं गच्छति ह्न देवदत्तेन ग्रामः गम्यते।

सीता ग्रन्थं पठति ह्न सीतया ग्रन्थः पठ्यते।

कर्तृवाच्य से भाववाच्य में बदलने के लिए प्रथमान्त कर्ता में तृतीया-विभक्ति और क्रिया आत्मनेपदी लगाना चाहिए,

जैसे - कर्तृवाच्य कर्मवाच्य

*देवदत्तः हसति ह्व देवदत्तेन हस्यते।*

*शिशुः रोदिति ह्व शिशुना रुद्यते।*

## ***धातुरूपाणि***

## ***दृश् (पश्य) परस्मैपदी***

***<u>लट्लकारः (वर्तमानकाल)</u>***

***प्रथमपुरुषः पश्यति पश्यतः पश्यन्ति***

***मध्यमपुरुषः पश्यसि पश्यथः पश्यथ***

***उत्तमपुरुषः पश्यामि पश्यावः पश्यामः***

***<u>लोट्लकारः (आज्ञा/प्रार्थना)</u>***

***प्रथमपुरुषः पश्यतु/पश्यतात् पश्यताम् पश्यन्तु***

***मध्यमपुरुषः पश्य/पश्यतात् पश्यतम् पश्यत***

***उत्तमपुरुषः पश्यानि पश्याव पश्याम***

***<u>लङ्लकारः (भूतकाल)</u>***

***प्रथमपुरुषः अपश्यत् अपश्यताम् अपश्यन्***

***मध्यमपुरुषः अपश्यः अपश्यतम् अपश्यत***

***उत्तमपुरुषः अपश्यम् अपश्याव अपश्याम***

***<u>विधिलिङ्लकारः (विधि/संभावना)</u>***

***प्रथमपुरुषः पश्येत् पश्येताम् पश्येयुः***

***मध्यमपुरुषः पश्येः पश्येतम् पश्येत***

*उत्तमपुरुषः पश्येयम् पश्येव पश्येम*

*<u>लृट्लकारः (भविष्यत्काल)</u>*

*प्रथमपुरुषः द्रक्ष्यति द्रक्ष्यतः द्रक्ष्यन्ति*

*मध्यमपुरुषः द्रक्ष्यसि द्रक्ष्यथः द्रक्ष्यथ*

*उत्तमपुरुषः द्रक्ष्यामि द्रक्ष्यावः द्रक्ष्यामः*

**नी (ले जाना) परस्मैपदी**

*लट्लकारः (वर्तमानकाल)*

*पुरुषः एकवचनम् द्विवचनम् बहुवचनम्*

*प्रथमपुरुषः नयति नयतः नयन्ति*

*मध्यमपुरुषः नयसि नयथः नयथ*

*उत्तमपुरुषः नयामि नयावः नयामः*

*लोट्लकारः (आज्ञा/प्रार्थना)*

*प्रथमपुरुषः नयतु/नयतात् नयताम् नयन्तु*

*मध्यमपुरुषः नय/नयतात् नयतम् नयत*

*उत्तमपुरुषः नयानि नयाव नयाम*

*लङ्लकारः (भूतकाल)*

*प्रथमपुरुषः अनयत् अनयताम् अनयन्*

*मध्यमपुरुषः अनयः अनयतम् अनयत*

*उत्तमपुरुषः अनयम् अनयाव अनयाम*

*विधिलिङ्लकारः (विधि/सम्भावना)*

*प्रथमपुरुषः नयेत् नयेताम् नयेयुः*

*मध्यमपुरुषः नयेः नयेतम् नयेत*

*उत्तमपुरुषः नयेयम् नयेव नयेम*

*<u>लृट्लकारः (भविष्यत्काल)</u>*

*प्रथमपुरुषः नेष्यति नेष्यतः नेष्यन्ति*

*मध्यमपुरुषः नेष्यसि नेष्यथः नेष्यथ*

*उत्तमपुरुषः नेष्यामि नेष्यावः नेष्यामः*

**याच् - माँगना (आत्मनेपदी)**

*लट्लकारः (वर्तमानकाल)*

*पुरुषः एकवचनम् द्विवचनम् बहुवचनम्*

*प्रथमपुरुषः याचते याचेते याचन्ते*

*मध्यमपुरुषः याचसे याचेथे याचध्वे*

*उत्तमपुरुषः याचे याचावहे याचामहे*

*लोट्लकारः (आज्ञा/प्रार्थना)*

*प्रथमपुरुषः याचताम् याचेताम् याचन्ताम्*

*मध्यमपुरुषः याचस्व याचेथाम् याचध्वम्*

*उत्तमपुरुषः याचै याचावहै याचामहै*

*लङ्लकारः (भूतकाल)*

*प्रथमपुरुषः अयाचत अयाचेताम् अयाचन्त*

*मध्यमपुरुषः अयाचथाः अयाचेथाम् अयाचध्वम्*

*उत्तमपुरुषः अयाचे अयाचावहि अयाचामहि*

*विधिलिङ्लकारः (विधि/सम्भावना)*

*प्रथमपुरुषः याचेत याचेयाताम् याचेरन्*

*मध्यमपुरुषः याचेथाः याचेयाथाम् याचेध्वम्*

*उत्तमपुरुषः याचेय याचेवहि याचेमहि*

*लृट्लकारः (भविष्यत्काल)*

*प्रथमपुरुषः याचिष्यते याचिष्येते याचिष्यन्ते*

*मध्यमपुरुषः याचिष्यसे याचिष्येथे याचिष्यध्वे*

*उत्तमपुरुषः याचिष्ये याचिष्यावहे याचिष्यामहे*

***स्था (तिष्ठ्) आत्मनेपदी***

***<u>लट्लकारः (वर्तमानकाल)</u>***

***पुरुषः एकवचनम् द्विवचनम् बहुवचनम्***

***प्रथमपुरुषः तिष्ठति तिष्ठतः तिष्ठन्ति***

***मध्यमपुरुषः तिष्ठसि तिष्ठथः तिष्ठथ***

***उत्तमपुरुषः तिष्ठामि तिष्ठावः तिष्ठामः***

***<u>लोट्लकारः (आज्ञा/प्रार्थना)</u>***

***प्रथमपुरुषः तिष्ठतु तिष्ठताम् तिष्ठन्तु***

***मध्यमपुरुषः तिष्ठ तिष्ठतम् तिष्ठत***

***उत्तमपुरुषः तिष्ठानि तिष्ठाव तिष्ठाम***

***<u>लङ्लकारः (भूतकाल)</u>***

***प्रथमपुरुषः अतिष्ठत् अतिष्ठताम् अतिष्ठन्***

***मध्यमपुरुषः अतिष्ठः अतिष्ठतम् अतिष्ठत***

***उत्तमपुरुषः अतिष्ठम् अतिष्ठाव अतिष्ठाम***

***<u>विधिलिङ्लकारः (विधि/सम्भावना)</u>***

***प्रथमपुरुषः तिष्ठेत् तिष्ठेताम् तिष्ठेयुः***

***मध्यमपुरुषः तिष्ठेः तिष्ठेतम् तिष्ठेत***

*उत्तमपुरुषः तिष्ठेयम् तिष्ठेव तिष्ठेम*

***<u>लृट्लकारः (भविष्यत्काल)</u>***

*प्रथमपुरुषः स्थास्यति स्थास्यतः स्थास्यन्ति*

*मध्यमपुरुषः स्थास्यसि स्थास्यथः स्थास्यथ*

*उत्तमपुरुषः स्थास्यामि स्थास्यावः स्थास्यामः*

*निर्देशन –*

- *श्री संजय सिन्हा, निदेशक, राज्य शैक्षिक अनुसन्धान एवं प्रशिक्षण परिषद् ,उ.प्र.*
- *श्री अजय कुमार सिंह ,संयुक्त निदेशक, शैक्षि राज्यक अनुसन्धान एवं प्रशिक्षण परिषद् ,उ.प्र.*

**e-book *विकास* ---**

- *अल्पा निगम(प्र.अ.) ,प्राथमिक विद्यालय तिलौली, गोरखपुर*
- *अमित शर्मा(स.अ),उच्च प्राथमिक विद्यालय महतवानी, उन्नाव*
- *अनीता विश्वकर्मा(स.अ), प्राथमिक विद्यालय सैदपुर पीलीभीत*
- *अनुभव यादव(स.अ), प्राथमिक विद्यालय गुलरिया उन्नाव*
- *अनुपम चौधरी (स.अ),प्राथमिक विद्यालय नौरंगाबाद बदायूं*
- *आशुतोष आनंद (स.अ),उच्च प्राथमिक विद्यालय मियाँगंज बाराबंकी*
- *दीपक कुशवाहा (स.अ),उच्च प्राथमिक विद्यालय गजफ्फरनगर, उन्नाव*
- *फिरोज खान (स.अ),प्राथमिक विद्यालय चिड़ावक, बुलंदशहर*
- *गौरव सिंह (स.अ),उच्च प्राथमिक विद्यालय फतेहपुर मठिया, फतेहपुर*
- *हृतिक वर्मा (स.अ),प्राथमिक विद्यालय संग्राम खेड़ा ,उन्नाव*
- *नितिन कुमार पाण्डेय (स.अ),प्राथमिक विद्यालय मध्यनगर ,श्रावस्ती*
- *मनीष प्रताप सिंह (स.अ),प्राथमिक विद्यालय प्रेम नगर, फतेहपुर*
- *प्राणेश भूषण मिश्र (स.अ),पूर्व माध्यमिक विद्यालय पठा, ललितपुर*
- *प्रशांत चौधरी (स.अ),प्राथमिक विद्यालय रवाना, बिजनौर*
- *राजीव कुमार साहू (स.अ),उच्च प्राथमिक विद्यालय ,सराय गोकुल सुल्तानपुर*
- *शशि कुमार(स.अ), प्राथमिक विद्यालय खेड़ा, लच्छीखेड़ा,अकोहरी उन्नाव*
- *शिवाली गुप्ता (स.अ),पूर्व माध्यमिक विद्यालय धौलरी,मेरठ*
- *वरुणेश मिश्रा (स.अ),प्राथमिक विद्यालय मदनपुर पनियार ,सुल्तानपुर*